# भेल संहिता

## सूत्रस्थानम्

## चतुर्थोऽध्यायः

### पिप्पल्यादि पानप्रलेपनम्

पिप्पल्यो दीप्यकश्चैव तथा मूषिककर्णिकाः
बिल्वस्य पल्लवाः श्वेता हरिद्रा मधुकं तथा १
एते कुष्ठं प्रतिघ्नन्ति युक्ताः पानप्रलेपनैः

### गोपित्तादि प्रलेपः

गवां पित्तं शुनः पित्तं अलाबूं कटुकां तथा २
निम्बं नतं शर्करां च दद्यात्तद्वत्प्रलेपनम्

### अन्यः प्रलेपः

या तुण्डमण्डलीद्वीपात् मूलान्येडगजस्य च ३
सुरादनीं सुगन्धां च दद्यात्तद्वत्प्रलेपनम्

### सुवर्णपुष्प्यादि शोधनम्

सुवर्णपुष्पीं कटुकां श्यामां तेजोवतीं तथा ४
त्रिवृत्सञ्ज्ञातकं चैव कुष्ठे संशोधनं विदुः

### आरग्वधादि तनुलेपनम्

आरग्वधं च भार्गीं च साश्वगन्धाम् गवादनीम् ५
श्वेतां ज्योतिष्मतीं चैव सूक्ष्मचूर्णानि कारयेत्
गवां पित्तेन तच्चूर्णं सप्तकृत्वः सुभावितम् ६
योज्यं सर्षपतैलेन सैन्धवेन च युक्तितः
एतद्वै हृतदोषस्य मितदध्यन्नभोजिनः ७
तनुलेपनमुद्दिष्टं कृमिकुष्ठविनाशनम्

गवेधुकमकुष्ठप्रयोगः

गवेधुकमकुष्ठौ च खदिरक्वाथपाचितौ ८
तावप्युभौ प्रयुञ्जीत कुष्ठिनां कुष्ठ शान्तये

कराडूघ्नवृत्तप्रयोगः

अथ कराडूघ्नवृत्ताणां रसाः स्युः कुष्ठिनां हिताः ९

खदिरकल्पः

प्रलेपपरिषेकेषु खदिरस्तु प्रशस्यते
खदिरोदकपायी स्यात्खदिरोदकभोजनः १०
भूयिष्ठमुदकार्थे च कुर्वीत खदिरोदरम्

धवादिगोमूत्रपरिषेकः

सारवन्तौ महावृत्तौ धवरोहितकावुभौ ११
शिंशुपा चाश्वकर्णश्च खदिरो बिल्वमाश्रितः
कदलीमुष्ककौ हिंस्रा भद्रोदुम्बरिकाफलम् १२
एतैरप्युषितं कुष्ठे गोमूत्रं परिषेचनम्

सालादिनिर्यासप्रयोगः

सालाश्वकर्णनिर्यासो निर्यासः कुलिशस्य च १३
एते कुष्ठनिमित्तानां व्रणानां स्युः प्रपीडका

पुराडरीकचिकित्सा

पुराडरीकस्य वद्त्यामि क्रियां रोगविनाशिनीम् १४
आवर्तां शाल्मलीमूलं मलयूकां सुधा वरीम्
भद्रोदुम्बुरिकामूलं फलान्यावल्गुजानि मा १५
रात्रौ यन्त्रेण निष्पीड्य दन्तिचित्रकमेव च
पाठां हरिद्रे च तथा गवां मूत्रेण योजयेत् १६

अष्टभागावशिष्टं तत्साधितं सुपरिष्कृतम्
पिबेत्काल्यं समुत्थाय श्वित्री शीतोदकं पिबेत् १७
सर्वतः परिरक्षेत्तु स्थापयेच्चैनमातपे
भैषज्यपीडिता दोषास्त्वचस्यानुसंश्रिताः १८
मण्डलेषु तपस्फोटं जनयन्त्यर्करश्मिभिः
स्फोटेष्वथ जातेषु छायायामुपवेशयेत् १९
शीताभिरद्भिः प्रक्षाल्य भोजयेद्रसभोजनम्
संक्षुभ्यन्तेऽथ वै तोयपरिपूर्णा इवाम्बुदाः २०
सूच्यग्रेणाथ तीक्ष्णेन व्यथयेत्कण्टकेन वा
चन्दनस्य च यत्सारं बदरात् खदिरस्य च २१
एतैः पानीयपिष्टैस्तु सर्पिःक्षौद्रसमन्वितैः
पत्रेषु पुष्करिण्यास्तु संविष्टस्याथ देहिनः २२
ततस्त्वालेपयेत्स्फोटान् शीतोदकपरिप्लुतान्
क्षीरिणां चापि वृक्षाणां त्वचस्संक्षोदयेद् भिषक् २३
तैः कषायैश्च कल्कैश्च सिञ्चयेल्लेपयेच्च तम्
खर्जूरस्य च बीजानि शङ्खनाभिं च दापयेत् २४
अञ्जनं तगरं पत्रं गैरिकं नीलमुत्पलम्
एषां सूक्ष्मेण चूर्णेन स्रवन्तमवचूर्णयेत् २५
शकृद्राक्षाक्षौद्रयुक्तो दातव्यः परिपोटने
आहारोत्सादनाभ्यङ्गं पूर्वेण विधिना भिषक् २६
कारयेत्कुष्ठिनामेवं ततः सम्पद्यते सुखी

व्याध्युपेक्षाप्रतिषेधः

एन च व्याधिमुपेक्षेत शरीरं पतितं बुधः
त्वरेत शमने तस्य प्रदीप्तस्येव वेश्मनः २७
यथा ह्येकान्ततो वृक्षो वर्धते सुखतश्शनैः

तथा शरीरमासाद्य रोगो वर्धत एव तु  २८
तस्माद्रक्षन्महावेगादक्षीणस्यैव देहिनः
प्रागेवोपचयाद्रोगान्हन्याद्वैद्यो विचक्षणः  २९

नस्यादिविधिः

त्र्यहात्त्र्यहाच्चावपीडः पक्षान्मासाद्वमेत्तथा
रेचयेदयने पूर्णे सिरामोक्षो विधीयते  ३०

पथ्यद्रव्याणि

श्यामाकाश्च मकुष्ठानि चणकाः कुष्ठिनां हिताः
एवं हि वर्तमानानां कुष्ठं प्रशममेति वै  ३१

इत्याह भगवानात्रेयः

इति भेले चतुर्थोऽध्यायः

पञ्चमोऽध्यायः

अथात्याशितीयं व्याख्यास्याम इति ह स्माह भगवानात्रेयः

शरीरस्याहारमूलकत्वम्

अथाशितेन पीतेन खादितेन च युक्तितः
बलमाप्यायते जन्तोः सद्यो वह्निरिवेन्धनैः  १

मात्राधिक्ये व्यापदः

तेनैवात्यादृतेनेह भोजनेन शरीरजाः
व्याधयस्संप्रवर्धन्ते कायाग्नावपि दूषिते  २

आहारस्य गुरुलाघवे स्वमतम्

द्विविधं तु भिषग्विद्यादाहारस्यैव लाघवम्
द्विविधं गौरवं भुक्ते प्रोच्यमानं निबोधत  ३

मात्रालघुस्स्यादाहारः कश्चिद्द्रव्यलघुः स्मृतः
मात्रागुरुस्तथैव स्याद्द्रव्यतश्च तथा गुरुः ४

प्रकृतिलघूनि

पुराणशालयो मुद्गाः शशतित्तिरिलावुकाः
एवंप्रकारं यच्चान्यत् तद्द्रव्यं लघु संस्मृतम् ५

प्रकृतिगुरूणि

ग्राम्यानूपौदकं मांसं दधि पिष्टं तिलाह्वयम्
एवंप्रकारं यच्चान्यत्तद्द्रव्यं गुर्विति स्मृतम् ६

गुरुणोऽपि मात्रया लघुत्वम्

यत्र यो मात्रया भुङ्क्ते द्रव्यं गुर्वपि मानवः
आहारं तस्य पश्यन्ति लघुमेव चिकित्सकाः ७

लघुनोऽपि मात्राधिकस्य गुरुत्वम्

शाल्यादीन्यपि योऽत्यर्थमश्नाति सुलघून्यपि
आहारस्य तथारूपो व्यक्तं सम्पद्यते गुरुः ८

एकान्तपथ्याहारः

द्रव्यस्य लघुनो युक्त्या सौहित्यं योऽधिगच्छति
एकान्तपथ्यं तं विद्यादाहारं कुशलो लघुम् ९

युक्त्या सौहित्येऽपि गुरुत्वम्

यदि युक्त्यापि सौहित्यं द्रव्यस्यालघुनो व्रजेत्
तथाविधमिहाहारं गुरुमेव ब्रवीम्यहम् १०

गुरुद्रव्याणां लघुत्वापादनम्

तस्मात्त्रिभागसौहित्यमर्धसौहित्यमेव वा
आहारं लघुमन्विच्छेत् गुरूणां सेवितं सदा ११

लघूनामपि मात्राधिक्ये गुरुत्वम्

लघु वापि समासाद्य द्रव्यं यो ह्यतिसेवते
तल्लघ्वप्यतिसंयुक्तं कोष्ठे सम्पद्यते गुरु १२

वैद्यस्य गुरुलाघवज्ञानापेक्षा

गुरुलाघवविद्वैद्यो नराणां वर्धयत्यसून्
तस्मादेवं विजानीयाद्द्रव्याणां गुरुलाघवम् १३

पथ्यापथ्यफलम्

एवमेव च भोज्येन पथ्येनाप्यायते नरः
हीयते चाप्यपथ्येन प्रदुष्टैर्मारुतादिभिः १४
स्वस्थस्यान्नेन वर्धन्ते धातवः शोणितादयः
व्याधितस्यापि दोषाय भोज्यं परिणमत्यथ १५
यथा ह्यकालवृष्ट्या च भूमौ बीजं विपद्यते
वर्धते कालवृष्ट्या च देहिनोऽपि तथा रसैः १६

सद्वृत्तम्

यश्च नित्यमुदारः स्यात्सुखनिश्चलमानसः
लघुपानरतः सात्म्येऽपि यथागसि दूरगः १७
स्नातोऽनुलिप्तः स्रग्वी स्याद्धौतदन्तस्स्वलंकृतः

धर्मादीनामन्नाश्रितत्वम्

धर्मस्सत्यमहिंसां च प्रायो ह्यन्नं समाश्रितम् १८

कफादिजरोगाणां शोधनचिकित्सा

वमयेच्छ्लेष्मरोगांश्च पैत्तिकांश्च विरेचयेत्
निरूहयेद्वातरोगान् रक्तजांश्चावसेचयेत् १९

नित्यानुशीलनीयानि

रक्तशालीन् समुद्गान् वा षष्टिकानथवा पुनः
सुस्विन्नान्मात्रयाश्नीयान् घृतसैन्धवसंयुतान्  २०
ईषत्पिप्पलिकं यूषमीषच्च मधुनान्वितम्
ईषत्सलवणं चापि पयश्चार्धकृतं पिबेत्  २१
विष्किरान्प्रतुदांश्चाजान् जाङ्गलांश्च मृगद्विजान्
यच्चान्यत्कटुकं पाके भोज्यं तन्नित्यमाचरेत्  २२

पुनः सद्वृत्तम्

पादाभ्यां न चरेत्कृष्टे विषमे कण्टकेषु च
गहनं परदारांश्च नदीः पूर्णाश्च न व्रजेत्  २३
कलहं चापि कोपं च रात्रिचर्यां विवर्जयेत्
गजस्य न स्यादासन्नः तोयार्द्रस्य च वाजिनः  २४
जनवादांश्च शौण्डांश्च द्विषतश्चापि मानवान्
म्लेच्छान्निकृतिबुद्धींश्च न सेवेत कदाचन  २५
सर्वान् सरीसृपांश्चैव क्षुद्रपादांश्च न स्पृशेत्
महिषान् गवयान् खड्गान् व्याघ्रान् सिंहांश्च वर्जयेत्  २६
नारोहेत्पादपान् वेश्म न धावेद्वर्षदुर्जले
न गवां प्रतिलोमं च न मध्ये नाग्रतो व्रजेत्  २७
सद्यः प्रवृष्टौ नारोहेद्धिमवन्तं च पर्वतम्
घृतमुष्णाम्बु च भजेदेतदारोग्यमुत्तमम्  २८

इत्याह भगवानात्रेयः

इति भेले पञ्चमोऽध्यायः

षष्ठोऽध्यायः

अथ न वेगान्धारणीयं व्याख्यास्याम इति ह स्माह भगवानात्रेयः

न वेगान्धारयेद्धीरः प्राप्तान्मूत्रपुरीषयोः
न वातस्य न पित्तस्य न शुक्लस्य कफस्य च १
उद्गारच्छर्दिजृम्भाणां तथा च क्षवथोरपि
न बाष्पस्य न निद्रादेः प्राप्तं वेगं विधारयेत् २

वेगोदीरणधारणे दोषः

रोगसञ्जनका ह्येते हिंस्युरायुर्विधारिताः
एतानेव प्रकुर्युश्च तथाऽप्राप्तास्समीरिताः ३

वातमूत्रपुरीष शुक्रवेगधारणे व्यापदः

वातमूत्रपुरीषाणां धारणादनिलादयः
कुप्यन्ति रेतसश्चापि शर्करा साश्मरी तथा ४

छर्दिपित्तकफवेगधारणे व्यापदः

त्वग्दोषो वा ज्वरो वा स्यात् गात्रे शोफादि वा पुनः
छर्दिपित्तकफानां तु धारणेन समीरणात् ५

जृम्भाबाष्पधारणे दोषः

जृम्भादिधारणादान्ध्यं तिमिरं बाष्पधारणात्

क्षवथूद्गारनिद्रादिधारणे दोषः

क्षवथूद्गारनिद्रादेः धारणात्स्याच्छिरोरुजा ६

प्रातर्मलोत्सर्जनविधिः

तस्मान्मूत्रपुरीषं वै विसृजेत्काल्यमुत्थितः

धार्या वेगाः

उक्ता ह्याधारणीयास्तु धारणीयान्निबोधत ७
लोभमोहभियां तृष्णाचिन्तयोर्मदमानयोः
शैर्यस्य च तथा विद्वान् प्राप्तं वेगं विधारयेत् ८

एतद्धारयतो ह्यस्य बलमायुश्च वर्धते

मलोत्सर्जने उदङ्मुखत्वादि

उदङ्मुखश्शुचौ देशे प्राङ्मुखश्चाऽवकुण्ठितः ९
आवश्यकमुपासीत कृते चाद्भिरुपस्पृशेत्

दन्तधावनविधिः

कृतशौचस्ततो जन्तुर्भक्षयेद्दन्तधावनम् १०
धवं पलाशं न्यग्रोधं नक्तमालमथापि वा
शिरीषं करवीरं च जातिवृक्षमथार्जुनम् ११
एतेषां दन्तधावनं श्रेष्ठमाह पुनर्वसुः
आपाट्य विदलीकृत्य दन्तमांसमबाधयन् १२

दन्तधावनगुणाः

तदस्य शोधयेद्वक्त्रं पित्तस्य च कफस्य च
शमनं वातरक्तादेः कुरुते दन्तधावनम् १३

कवलधारणम्

मुस्तकल्कं सत्रिफलं मधु तैलं सुखोदकम्
प्रत्येकं कवलग्राहं धारयेदनुपूर्वशः १४
वातपित्तकफा दृष्टाः शाम्यन्ति कवलग्रहात्

माधूकतैलगण्डूषः

माधूकं चोपदेहघ्नं स्वररक्तप्रसादनम् १५
तैलं दन्त्यं सुरभिकृत्तदभिष्यन्दनाशनम्
क्षतं संरोहयेद्वक्त्रं शीर्यमाणं नियच्छति १६

अभ्यङ्गगुणाः

इन्द्रियाणां मतोऽभ्यङ्गो गुरुदोषविमोक्षणः

त्वग्दोषशमनो बल्यो वातरक्तप्रसादनः १७
ग्राम्यधर्मातिगत्या च रथाश्वगजपातनात्
दण्डमुष्टिहतानां च रुजाश्रमविनाशनः १८
त्वचः प्रसादनोऽभ्यङ्गः

उत्सादनगुणाः

शाम्यत्युत्सादनात्क्लमः

सेकगुणाः

प्रहर्षं कुरुते स्थैर्यं मलघ्नं चावसेचनम् १९

विलेपनगुणाः

विलेपनं ह्लादयति कण्डूं हन्ति प्रसादनम्

अञ्जनगुणाः

शिशिरं ह्यञ्जनं दृष्टेः तिमिरं च प्रणश्यति २०

तैलनस्यगुणाः

तनूरुहेन्द्रियबलं नस्यतैलादुपागतात्
स्वररक्तप्रसादश्च नश्यन्ति पलितानि च २१

नस्यधूमकालः

स्वक्तः सूत्सादितश्चैव प्रघृष्टश्च यथाबलम्
यथर्तुवारिणा स्नातस्त्वनुलिप्तस्ततः परम् २२
प्रसाधितोत्तमाङ्गश्च ततो नस्यं प्रदापयेत्
ततस्संशुद्धदोषस्य धूममस्य प्रकल्पयेत् २३

कुटन्नटादिधूमः

कुटन्नटैलाह्रीबेरं ध्यामकागरुचन्दनम्
कालानुसार्यां नलदं पृथ्वीकामथ गुग्गुलम् २४

तालीसं पद्मकं मुस्तं प्रियंगुं सहरेणुकाम्
हरिद्रां च सुगन्धां च सरलां देवदारु च २५
श्रीवेष्टकं सर्जरसं चोरकं चेति संहरेत्
वक्त्रं च सर्पिषाक्तं स्याद्धूममेतं ततः पिबेत् २६

धूमवर्तिप्रमाणम्

अष्टांगुलप्रमाणा वाप्यथवा द्वादशांगुला
षडंगुलप्रमाणां वा धूमवर्तिः प्रशस्यते २७

धूमनेत्रम्

सौवर्णं राजतं ताम्रं गजदन्तस्य वा पुनः
वृक्षसारमयं वापि धूमनेत्रं प्रशस्यते २८
चतुर्वा पञ्चकृत्वो वा धूमं स्रोतस्यवाचरेत्

धूमगुणाः

वातानुलोमनं कुर्याच्छ्लेष्माणं चापकर्षति
बलं ददाति दृष्टेश्च सम्यग्धूमो निषेवितः २९

प्रायोगिकधूमपानकालाः

अष्टौ धूमस्य कालाः स्युर्येषामन्ते प्रशस्यते
उत्थितस्यैव शयनाद्दन्तप्रक्षालने कृते ३०
जलक्रीडानिवृत्तस्य तथा भुक्तवतोऽशनम्
क्षुतोच्चारव्यवायान्ते भुक्तवान्तवतस्तथा ३१

कालविशेषेषु धूमपानगुणाः

गुणांश्चैकैकशस्तेषां धूमपानकृतान् शृणु
तत्र शय्योत्थितस्यैव वक्ष्याम्यथ यथाक्रमम् ३२
हन्त्युत्सन्नं कफं जन्तोष्षडिन्द्रियविबोधनः

प्रतिबुद्धस्य चेद्धूमो मारुतस्यानुलोमनः ३३
दन्तप्रक्षालनादूर्ध्वं रोगान्सम्यग्व्यपोहति
च्युतश्लेष्मापनयनः सुगन्धिविशदास्यकृत् ३४
दन्तमांसक्षयकृतव्याधयो वदनेषु ये
दोषाः कासप्रभृतयस्तांश्च धूमो व्यपोहति ३५
शिरोगता याश्च रुजाः सलिलक्रीडनोद्भवाः
कर्णशूलं प्रतिश्यायं चाशु धूमो व्यपोहति ३६
वातपित्तकफान् धूमः शमयेद्भोजनोद्गतान्
शिरोविशुद्धिं कुरुते भुक्तं च स्थापयत्यपि ३७
धमनिप्रतिपन्नस्तु वायुः क्षवथुनेरितः
व्याप्नोति सर्वस्रोतांसि स धूमेनानुलोम्यते ३८
वर्चःकर्मोद्धतो वायुर्गलमूर्धशिरोगतः
प्राणानाध्मापयति वा स धूमेनानुलोम्यते ३९
शुक्लस्रोतोगतो वायुरूर्ध्वमेव प्रपद्यते
स घोरान् हि सृजेद्रोगांस्तं धूमेनानुलोमयेत् ४०
रोगाधिपतये छर्द्या स्थानेभ्योऽभिसमीरिताः
अनारोग्याय कल्पन्ते तेषां धूमः प्रशस्यते ४१

शोधनान्ते धूमपानविधिः

हृतेषु दोषेष्वनिलः शून्यस्थानानि संचरन्
सम्मूर्च्छति शिरो गत्वा तं धूमेनानुलोमयेत् ४२

भुक्तस्यादिमध्यान्तेषु जलपानगुणाः

पूर्वं पीतोदको भुक्त्वा लभते कृशतां नरः
मध्ये भक्तस्य पिबतो भोजनं नापकृष्यते ४३
भुक्तवानथ पानीयं पश्चादनुपिबेच्च यः

तदाप्यानुगतं भुक्तं समत्वायोपपद्यते ४४

भुक्तस्य पाणयोरग्निप्रतापनम्

अग्नौ प्रतापयेत्पाणी स्यातां यावत्तु निर्जलौ

भोजनोत्तरं शतपदविन्यासः

ततः पदशतं गच्छेद्भक्तं ह्येवं प्रयात्यधः ४५

दध्युपयोगे नियमाः

न रात्रौ दधि भुञ्जीत नाघृतं नाप्यमाक्षिकम्
कुष्ठौ पतेपि वांछं किं कण्ठरोगाच्च बुद्धिमान् ४६

पुनः सद्वृत्तम्

तोयक्षिप्तं स्पृशेन्नान्नं न च पर्युषिताशनः
न चाजीर्णाशनो जन्तुर्जिघांसुर्व्याधिसंभवम् ४७
सोपानत्कस्तथा दण्डी छत्रेण व्यजनेन च
आबाधान् वर्जयेत्सर्वान्विचरेदापरिश्रमात् ४८
तपस्विनः पितृन्देवान्ब्राह्मणांश्च समाहितः
अर्चयन्विधिवन्नित्यं जीवेद्वर्षशतं नरः ४९

पुनर्वातमूत्रयोर्वेगधारणे दोषः

वातो हि शूलं विहतः करोति मूत्रप्रदोषं जनयेच्च मूत्रम्

कासवेगविधारणे व्यापदः

कासः प्रतिश्यायमथो क्षयं च श्वासं च कुर्याद्विहते तु वेगे ५०

पुनः पुरीषशुक्रवेगधारणे दोषः

पुरीषमानाहमतीव कुर्याद् रेतोऽवरोधः कुरुतेऽथ षाण्ड्यम्

दीर्घायुःकामुकस्य वेगविधारणनिषेधः

तस्माद्धि वेगं न विधारयेत् नरो य इच्छेदिह दीर्घमायुः ५१

इत्याह भगवानात्रेयः

इति भेले षष्ठोऽध्यायः

## सप्तमोऽध्यायः

अथात इन्द्रियोपक्रमणीयं व्याख्यास्याम इति ह स्माह भगवानात्रेयः

### यथाकालं मैथुनानुमतिः

इन्द्रियाणि हि सर्वाणि परिजीर्यन्ति जीर्यतः
तस्मात्सर्वत्र वयसि यथाकालं स्त्रियं व्रजेत् १

### मैथुने नियमाः

न त्वनाप्यायितबलः समागच्छेत्तु योषितः
नायोनिषु प्रयुञ्जीत तिर्यग्योनीश्च वर्जयेत् २
न प्राप्तं धारयेद्वेगं गत्वा शीतोदकं स्पृशेत्
न तु श्रान्तो न वा भुक्तो न क्लिष्टोऽप्याविलो न च ३
कृशो नात्यशितो वापि दीनो वा मैथुनं व्रजेत्
मितवाक् सततं यः स्यात्स्निग्धान्नाशी युवाचरेत् ४
सुबहुस्निग्धरेताश्च यथर्तुशयनाशनः
जीर्णामासन्नसत्वां च व्याधितां मलिनां कृशाम् ५
व्यङ्गिनीं परकामां च पूतिकोष्ठां च वर्जयेत्
बलमारोग्यमायुश्च वपुस्तेजश्च देहिनाम् ६
हीयते हीदृशीं गत्वा प्राप्याकालजरामिव
ऋतावृतौ यथाकालं मैथुनं ना समाचरेत् ७
वर्षासु नवरात्रात्तु दशरात्राच्छरद्यपि
पञ्चाहाद्धेमसमये सप्ताहाच्छिशिरे तथा ८
पक्षाद्वसन्ते ग्रीष्मे तु मासि मासि समाचरेत्

निदाघे पश्चिमे मासे मैथुनं चैव वर्जयेत् ९
अथवा यौवनोत्साहबलस्नेहसमन्वितः
शिशिराम्बुकृतस्नानो हृद्यस्रगनुलेपनः १०
नातिव्यायामनिरतः क्षीरमांसघृताशनः
हृद्यमाल्याम्बरधरा हृद्याभरणभूषिताः ११
हृद्ययौवनसंपन्नाः प्रियाः प्रियकथानुगाः
हृष्टाः सर्वत्र काले च शक्त्यर्धेन व्रजेत्स्त्रियः १२
चतुर्दशीं पञ्चदशीमष्टमीं च विवर्जयेत्

सद्वृत्तम्

पिबेत्क्षीरं घृतं नित्यमायुष्यकरणं हितम् १३
बलवर्णकरं ह्येतदारोग्यकरणं तथा
संहारयेद्रोमनखं त्रिर्मासस्य च मानवः १४
ओषधीश्च मणींश्चैव मङ्गल्यान् धारयेत्सदा
मन्त्रानावर्तयेच्चापि ब्रह्मप्रोक्तं सनातनम् १५
स मे माद्यापगाद्देहाद्वायुः प्राणाश्च ये सदा
इन्द्रो मे बलमादद्याद् शिवं चापो दिशन्तु नः १६
इत्येवं मन्त्रमार्षं वै भुक्त्वा गत्वाथवा स्त्रियः
संजपन्वै स्पृशन् वारि तथास्यायुर्न हीयते १७
इत्याह भगवानात्रेयः

इति भेले सप्तमोऽध्यायः

अष्टमोऽध्यायः

अथातो मात्राशितीयं व्याख्यास्याम इति ह स्माह भगवानात्रेयः
मात्राशी स्याद्विपक्वाशी दण्डपाणिर्मिताध्वगः

भोजनोत्तरं धूमपानम् गुणाश्च

यथर्तुभोजनं कृत्वा जन्तुर्धूममिमं पिबेत् १
कैडर्यश्शतपुष्पा च तालीसागुरुगुग्गुलु
प्रियङ्गवश्च क्षौमं च सर्पिषा स्नेहितं पिबेत् २
भोजनेनेरितो वायुः कोष्ठाच्छिरसि तिष्ठति
प्रसिध्यति स धूमेन कफश्चापैति चक्षुषः ३

तण्डुलादीनामुपयोगे नियमः

तण्डूलान् पृथुकांश्चापि सर्वान् पिष्टमयांस्तिलान्
न खादेद् भुक्तवान् जन्तुर्मात्रां खादेद्बुभुक्षितः ४

सद्वृत्तम्

अध्वना न श्रमं गच्छेत्सर्वान्वेगान्न धारयेत्
हित्वापि सर्वकार्याणि तथास्यायुर्न हीयते ५
वर्जयेद्विषमं दुःखमासनं पादलम्बनम्
रक्षेच्छरीरं वातेभ्यो नित्यमेव दुरासनात् ६
अत्यासनमतिस्थानमतिचङ्क्रमणानि च
अतिस्वप्नमशय्यां च तथा चाप्यतिभाषणम् ७
यच्च किंचिद्विचेष्टाभिरत्यर्थं कुरुते नरः
सर्वमेतदनायुष्यं भिषजः परिचक्षते ८
समस्थानासनगतिस्समशय्याशनस्तथा
समजल्पविचेष्टश्च चिरं जीवति मानवः ९
निवातमुपसेवेत सुखवातं कदाचन
निवातमायुषः पथ्यमारोग्याय च सर्वदा १०
आतपे नाचरेत्कर्म शिरस्त्राणमृते तथा
निदाघवर्जं च सदा नावश्या ये समाचरेत् ११

शरद्वसन्तप्रावृट्सु कारयेच्चानुवासनम्
रोगाश्च बस्तिदाप्याः स्युर्यस्य नित्यं च दापयेत् १२
स्वप्नान्तसन्ध्ययोश्चापि न खादेन्न च संविशेत्
न रात्रौ विचरेदेको नागारं शून्यमाविशेत् १३
चतुष्पथं परिहरेत्पर्वते न चिरं वसेत्
रात्रौ च वृक्षमूलानि परदारांस्तथैव च १४
राजानिष्टं प्रजाभङ्गं दावाग्निं कलहं नृणाम्
मत्तोन्मत्तांश्च संलक्ष्य दूरादेव विवर्जयेत् १५
वैरिणो नोपसेवेत बाहुभ्यां न नदीं तरेत्
हस्त्यश्वगाश्च सर्पं च दूरतः परिवर्जयेत् १६
मधुमेहश्च शोषश्च तृष्णा वाताद्युपद्रुतिः
मद्यपानात्तु न भवेत्तस्मात्तद्विधिवत्पिबेत् १७
आक्वाथितजलं मासांश्चातुरो मात्रया पिबेत्
श्रावणप्रभृतीनेव शेषानष्ट यथासुखम् १८

त्रिफलासेवने विधिः तत्र युक्तिश्च

अभुक्त्वामलकं खादेद् भुक्त्वा चापि हरीतकीम्
परिणामे च भक्तस्य खादेच्चापि विभीतकम् १९
कषायभावाच्छ्लेष्माणमम्लभावाच्च मारुतम्
पित्तं मधुरभावाच्च सम्यगामलकं जयेत् २०
उष्णाभावात्क्षणादेति पित्तं चाशयमूर्च्छितम्
सम्यङ्नयत्यतः खादेदभयां भुक्तवान्नरः २१
आहारपरिणामस्तु पित्तश्लेष्मविवर्धकः
तस्मात्साम्यं तयोरिच्छन्नाददीत विभीतकम् २२

सद्वृत्तम्

काल्यं विधिं वै कृत्वा च स्नायादृतुसुखैर्जलैः
सुस्थश्शुचिसमाचारः सदाचारपदे स्थितः २३
मूत्रमप्सु न कुर्वीत पुरीषं च कदाचन
न निष्ठीवेत्तथा प्राज्ञो रक्षञ्जीवितमात्मनः २४
न हरेद्विषमं ग्रीवां न वापि विषमं क्षुयात्
ऋज्वासीनो नरः खाद्यमाददीत विचक्षणः २५
मातरं पितरं भार्यामाचार्यं वानुपालयेत्
अभिवादनयोगाच्च वर्धयेदायुरात्मनः २६
राजापथ्यचरा ये वै ये च तद्द्रोहिणो नराः
विधर्मिणश्चानृताश्च न तैरेकीभवेत्क्वचित् २७
एतदप्याहुरारोग्यं धन्यं पूज्यं यशस्करम्
सद्भिराचरितं पूर्वं वृत्तमात्रेयसम्मतम् २८
इत्याह भगवानात्रेयः

इति भेले अष्टमोऽध्यायः

## नवमोऽध्यायः

अथातश्चतुष्पादभिषग्जितीयं व्याख्यास्याम इति ह स्माह भगवानात्रेयः

### चतुष्पादभेषजप्रशंसा

भेषजं हि चतुष्पादमातुरं कुरुतेऽगदम्
युनक्ति यशसा वैद्यमर्थमप्यस्य यच्छति १

### चतुष्पादसम्पत्

तस्मादौषधयोगस्य वैद्यस्याप्यातुरस्य च
उपस्थातुश्च वक्ष्यामि सम्पदं सिद्धिकारिकाम् २

प्रतिवातं यथा क्षिप्तः पांसुमुष्टिर्विनश्यति
तथा हि नाशमागच्छेदृते कर्म भिषक्कृतात् ३
नद्यां प्रस्यन्दमानायां श्वभ्रस्थाने स्थलेषु च
प्रणश्यति यथा वृष्टं तथा दुर्योजिताः क्रियाः ४
इष्वासस्तु यथा युक्तो धर्मात्मा खड्गपाणिधृत्
परेभ्यः क्षोभमाधत्ते पात्यात्मीयांश्च हन्त्यरीन् ५
एवं चिकित्सकः पादैर्भेषजैश्चोपबृंहितः
रक्षत्यकीर्तेरात्मानं व्याधिं चापि नियच्छति ६
सिध्यति प्रतिकुर्वाण इत्यात्रेयस्य शासनम्

भद्रशौनकस्याक्षेपः

अपि चाप्रतिकुर्वाण इत्याख्यद्भद्रशौनकः ७
गुणयुक्तातुरद्रव्यभिषक्परिचरान्विता
दृश्यते विफला यस्मान्नाफला तु विपर्यये ८
तस्मान्नैकान्तिकी सिद्धिश्चतुष्पादे चिकित्सिते

आत्रेयशासनम्

न त्वेतां बुद्धिमात्रेयश्शौनकस्यानुमन्यते ९
प्रतिकुर्वति सिद्धिर्हि वर्णोत्साहबलान्विता
न च स्याद्व्याधिबहुता न त्वेवाप्रतिकुर्वति १०
दुर्वर्णो दुर्बलश्च स्याद् व्याधिभिश्चाप्युपद्रुतः
विकलो वा भवत्यज्ञैरुपक्रान्त इवातुरः ११
न सा सिद्धिरसिद्धिः स्याद्यां दृष्ट्वा नाभिपद्यते
तस्मात् ज्ञानवतां सिद्धिं विन्देत मतिमान् भिषक् १२

औषधपादनिरूपणम्

तत्र प्रथमतः पादमौषधं तु निबोध मे

खं वायुरनलस्तोयं भूमिश्चैवेह पञ्चमी १३
गुणोत्तराणि सर्वाणि यथासंख्यं विभावयेत्
तेषान्तु ये भूतगुणाः पृथग्भावनिदर्शकाः १४
परस्परसमायोगाद्द्रव्येष्वेव भवन्ति ते

महाभूतलक्षणम्

लक्षणं खस्य सौषिर्यं रौक्ष्यं चाप्यनिलात्मकम् १५
औष्ण्यमग्नेरपां शैत्यं खरत्वं पार्थिवो गुणः
यस्मिन्यस्मिन् भवेल्लिङ्गमेतद्द्रव्ये विशेषतः १६
यस्य भूतस्य तद्द्रव्यं तत्तदात्मकमिष्यते

आकाशगुणाधिकभेषजम्

सौषिर्यं लाघवं यत्र भैषज्यं चापि खात्मकम् १७

वायुगुणाधिकभेषजम्

खरत्वं च विवेकश्च रौक्ष्यं चाप्यनिलात्मकम्

जलभूतगुणाधिकभेषजम्

स्नेहः क्लेदश्च शैत्यं च मृदुत्वं चापि वारिजम् १८

पृथिवीभूतगुणाधिकभेषजम्

गौरवं मूर्तिस्थैर्यं गन्धश्च पार्थिवम्

द्रव्येषु भूतगुणनिर्देशनिगमनम्

एतैर्भूतगुणैर्युक्तं यद्द्रव्यं तत्तदात्मकम् १९

प्रशस्तभेषजम्

पञ्चभूतात्मकैस्सर्वैर्गुणैस्तत्र समन्वितम्
प्रतिवासं रसो गन्धस्तदा प्रदुवनानि च २०
शितमुष्णोदकं चैव रैद्य चेदिप्रियं रथाः

सञ्जोपकरणत्वं च मूलत्वक्फलसञ्चयः २१
युक्तमात्रं च भैषज्यं गन्धवर्ण रसान्वितम्
शीतं चैव तथोष्णां च रोगिचेतः प्रियं तथा
सद्यः फलं प्रशस्तं च मूलत्वक्फलसञ्चितम्
मूलादीनां सुगन्धित्वं कन्याणस्पर्शवत्तथा
अन्यूनानतिरिक्तत्वरूपवच्च प्रशस्यते २२

गर्हितभेषजम्

स्थलात्मताकनिम्नेषु सैकतेषूपलेषु च
सुषिरं नातिविष्टं च तिर्यग्यातं च गर्हितम् २३

भेषजपादनिगमनम्

येनौषधार्थस्सद्यस्स्यात्तेन चाप्रतिबध्नता
भेषजं प्रथमः पादः इति ज्ञेयं चिकित्सिते २४

प्रशस्तपरिचरः

प्रतिश्रावी द्वितीयः स्यात्तस्य प्रत्येकशो गुणाः
बलवान् दक्षिणो दक्षः प्रियवागजुगुप्सकः २५
वीरश्चाप्रतिकूलश्च रक्तश्चित्रकथस्तथा
प्रज्ञावांश्चाप्युपस्थायी तथा शास्त्रानुसारतः २६
न चातिप्रतिबध्नीयात्सर्वेष्वौषधकर्मसु
प्रशस्यते क्लेशसहः प्रतिश्रावी यथागुणः २७

प्रशस्तातुरः

तृतीयश्चातुरः पादः सत्याशंसी प्रशस्यते
लक्षणश्चात्मवांश्चैव कृतज्ञस्सुमनाश्च यः २८
औषधस्य प्रतिग्राही न च रोगान्निगूहयेत्
दृढभक्तोऽनसूयश्च यश्चापि न विषीदति २९

सर्वत्राप्रतिकूलश्च न क्रियामतिवर्तते
एभिर्गुणैस्समायुक्तं जानीयात्साध्यमातुरम्  ३०

प्रशस्तभिषक्

भिषक् चतुर्थः पादस्तु ससूत्रार्थविशारदः
अरोगो दृष्टकर्मा च कृतकृत्येषु कोविदः  ३१
प्रयोक्ता च प्रगल्भश्च क्षमावान्प्रतिभानवान्
बुद्धिमांस्तर्ककुशलो वीर्यौदार्यबलान्वितः  ३२
अस्तब्धश्चाप्रमत्तश्च सततं संयतेन्द्रियः
ओजस्वी चौषधज्ञश्च देशकालप्रयोगवित्  ३३
भिषक् चतुर्थपादः स्यादेवंगुणसमन्वितः

पादचतुष्टयस्य परस्परबलावहत्वम्

भेषजं च प्रतिश्रावी भिषगातुर एव च  ३४
अन्योन्यगुणसंयोगादेते स्युस्सिद्धिकारकाः

पादवैगुण्ये दोषः

एत एव च वैगुण्यात्तस्य व्याधिविवर्धनाः  ३५

पादसम्पदः सिद्धिहेतुत्वम्

तस्माच्चतुर्षु पादेषु चिकित्सासिद्धिरिष्यते
पक्तये कारणं पक्तुर्यथा पात्रेन्धनानलाः  ३६
विजेतुर्विजये भूमिश्चमूः प्रहरणानि च
आतुराद्यास्तथा पादाः सिद्धौ कारणसंज्ञिताः  ३७

भिषक्प्रशंसा

मृद्दण्डचक्रसूत्राद्याः कुम्भकारादृते यथा
नावहन्ति गुणान् वैद्यादृते पादत्रयं तथा

विद्यात्तस्माच्चिकित्सायां प्रधानं कारणं भिषक् ३८
इत्याह भगवानात्रेयः

इति भेले नवमोऽध्यायः

## दशमोऽध्यायः

अथात आमप्रदोषीयं व्याख्यास्याम इति ह स्माह भगवानात्रेयः

### अग्निमान्द्ये हेतुः

अथाह तैलात्पिष्टान्नात् कृसरात् पायसादपि
विरुद्धाध्यशनादामाच्छालूकाच्छुष्कशाकतः १
ह्रीशोकक्रोधकामेर्ष्या लोभोद्वेगाद्भयादपि
अन्यस्मादीदृशाद्वापि रात्रौ जागरणेन वा २
जन्तोश्शाम्यति कायाग्निरथवा दुष्टशय्यया

### मन्दाग्निजा विकाराः

उद्वेष्टयन्तेऽस्य गात्राणि कटिपृष्ठं च दूयते ३
जङ्घे शूलायतश्चास्य ज्वरश्चास्योपजायते
शिरो गुरु भवत्यस्य तथा नेत्रे शरीरिणः ४
सोद्गारं सविदाहं च कफपित्तं प्रसिच्यते
स्तिमितं चास्य हृदयमाध्मातमिव चोदरम् ५
दृतिः पूर्ण इवानद्धः क्षुभ्यते दोषसंचयात्
संछर्दयति चाभीक्ष्णं मूर्च्छां चापि नियच्छति ६
अपि तृष्यत्ययं गाढमास्यं ह्यस्योपशुष्यति
स्वरभेदोऽस्य भवति कण्ठश्शुष्क इवोद्गतः ७
मन्ये च परिदह्येते श्रद्धा चास्य न जायते
यदास्य वायुः पित्तं च श्लेष्मा चापि समुद्गतः ८

आमेन संयुतश्चैव सावशेषः प्रवर्तते
स उभाभ्यां तथाभीक्ष्णं स्रोतोभ्यामतिरेचितः ९
कफपित्ते क्षयं प्राप्ते वाते हि किल मूर्च्छिते
शुद्धकोष्ठे हृते दोषे शून्यकाये च मारुतः १०
एकस्थाने त्वनासक्तो विधावति ततस्ततः
वङ्क्षणं हृदयं नाभिबस्तिमर्माणि चाविशन् ११
संज्ञां हृत्वैव कुरुते मुहुर्मुहुरचेतनम्
इत्येतद्रूपमामस्य यथावदुपलक्षयेत्

जीर्णान्नलक्षणम्

अत ऊर्ध्वं प्रवक्ष्यामि जीर्णस्यान्नस्य लक्षणम्
मधुरः पूर्वमुद्गारो मध्ये चाम्लो यदा भवेत् १३
पश्चात्सकटुकश्चापि निर्विदाहो भवत्यथा
लाघवं वीक्ष्यते काये विशुद्धं विशदं मुखम् १४
प्रगुणं कुरुते वातमूर्ध्वं वा यदि वाप्यधः
भोक्तुं श्रद्धा भवत्यस्य रुजा चान्योपशाम्यति १५
इत्येभिर्लक्षणैर्जीर्णं विद्यादन्नं शरीरिणाम्

अजीर्णे चिकित्साक्रमः

अजीर्णं लङ्घयेदामे पाचनीयस्ततो भवेत् १६
यवाग्वादिभिराहारैस्संसृजेद्वा तमुत्तरम्

आमे शुण्ठ्यादिक्वाथः

शुण्ठीप्रतिविषामुस्ताक्वाथः स्यादामपाचनः १७

रुचिप्रदः क्वाथः

शुण्ठीजीरकधान्याकैस्तुल्यैः क्वाथो रुचिप्रदः

मुस्तादिचूर्णः

मुस्तं हिङ्गु त्रिकटुकं पाठा वत्सा हरीतकी १८
चूर्णः प्रतिविषा चेति चित्रकश्चामनाशनः

पिप्पलीनागरक्षारः

पिप्पलीनागरक्षारस्सुखोदकसमायुतः १९

स्वेदादिविधिः

स्वेदनं फलवर्तिश्च शूलेषु स्तिमितेषु च

फलवर्तिः

अगारधूमः पिप्पल्यो मदनं राजसर्षपाः
गोमूत्रपिष्टास्सगुडाः फलवर्तिः प्रशस्यते २०
इत्याह भगवानात्रेयः

इति भेले दशमोऽध्यायः

एकादशोऽध्यायः

अथातस्समशयनपरिघनीयं व्याख्यास्याम इति ह स्माह भगवानात्रेयः

आहारस्य द्विधा परिणामः

आहारं प्रघसं नृणामुपयुक्तं चतुर्विधम्
पच्यमानं द्विधा काये कोष्ठे रसमलाख्यया १

मलस्य बहिर्निर्गमनम्

स्वेदमूत्रशकृद्रूपैर्निष्क्रामति मलः पुनः

रसादिधातुसम्भवः

अन्नस्य पाकतस्तेजो रसो निर्वर्त्यते नृणाम् २

रसाद्रक्तं ततो मांसं मांसान्मेदस्ततोऽस्थि च
अस्थ्नो मज्जा ततः शुक्लं शुक्लाद्गर्भस्य संभवः ३
एवं पूर्वात्परं याति धातुं धातुर्यथाक्रमम्

मात्राभुक्तस्य रोगाजनकत्वम्

मात्रापथ्यं यदा भुक्तं रसरूपं गतं पुनः ४
कुर्यान्न रोगान् दीप्ताग्नेः रसव्यापत्तिसम्भवान्
शोणिताद्यात्मतां गच्छेत् परिणामवशां तदा ५

रसव्यापत्तिजाः व्याधयः

यस्मिन् व्यापद्यते दातौ तस्मिन् व्याधीन् करोत्यथ
विषूचिकां सालसकां पित्तदाहं विलम्बिकाम् ६
अन्येद्युष्कं सततकं तृतीयकचतुर्थकम्
पित्तं लोहितपित्तं च रक्तार्शांसि प्रलेपकम् ७
विपाटिकांश्च तान् व्याधीन् रसव्यापत्तिजान् विदुः

रक्तव्यापत्तिजा रोगाः

कच्छूं चर्मदलं पामां चर्मकीलं विचर्चिकाम् ८
व्यङ्गवीसर्पकुष्ठानि रक्तव्यापत्तिजान्विदुः

मांसव्यापत्तिजा रोगाः

मांसकीलार्बुदं गण्डमजकां जातुलानि च ९
पूतिमांसालजीश्चैव मांसव्यापत्तिजान् विदुः

मेदोव्यापत्तिजा रोगाः

दौर्गन्ध्यं स्वेदनं स्थौल्यं पिपासां बहुनिद्रताम् १०
प्रमेहान् विंशतिं चापि मेदोव्यापत्तिजान्विदुः

अस्थिव्यापत्तिजा रोगाः

दन्तरोगो नखश्मश्रुकेशरोमाभिपातनम्  ११
अतिवृद्धिस्तथा वास्थ्नामस्थिव्यापत्तिजान् विदुः

मज्जाव्यापत्तिजा रोगाः

विदाहं च मदं चैव सोन्मादं चापतानकम्  १२
तमोदर्शनमूर्छायौ मज्जाव्यापत्तिजान् विदुः

शुक्लव्यापत्तिजा रोगाः

रेतः क्षाराग्निमञ्जिष्ठानीलहारिद्रकं पृथक्  १३
मेहने भस्मवर्णं च शुक्लव्यापत्तिजान्विदुः

गर्भव्यापत्तिजा विकाराः

नरस्य स्त्रीस्वरत्वं वा स्त्री वापि पुरुषस्वरा  १४
आमगर्भच्युतिर्वापि गर्भव्यापत्तिजान्विदुः

विरुद्धशननिषेधः

इत्येते आमजा नृणां विरुद्धाध्यशनात्मकाः
विरुद्धाशनवर्जी स्यादेतदारोग्यमुत्तमम्  १५
इत्याह भगवानात्रेयः

इति भेले एकादशोऽध्यायः

## द्वादशोऽध्यायः

अथातः आत्रेयखण्डकाप्यीयं व्याख्यास्याम इति ह स्माह भगवानात्रेयः

रसचर्चा

आत्रेयः खण्डकाप्यश्च मैत्रेयोऽन्ये च तद्विधाः
रससंख्याकथां चक्रुर्वने चैत्ररथे द्विजाः  १

रसस्यैकत्वम्

तत्र कश्चिद्रसैकत्वं रससामान्यतोऽब्रवीत्

रसस्य द्वित्वत्रित्वे

सात्म्यासात्म्यात्तथा द्वित्वं त्रैविध्यं स्थानतोऽपरे २

रसस्य चतुर्विधत्वम्

स्वादुरस्वादुरमृदुर्मृदुश्चेति चतुष्टयम्

रसस्य पञ्चविधत्वम्

महाभूतविभागेन पञ्चेत्याहुस्तथापरे ३
तदेतदेवं जानीयाद्यथोक्तादेव कारणात्

रसस्य षड्विधत्वं सप्तविधत्वं च

षट्त्वं सप्तत्वमथवा ब्रूयुस्तद्रुचिभेदतः ४
मधुरो लवणाम्लौ च कषायकटुतिक्तकाः
क्षारश्च तान् रसान् सप्त नातिरेकं समाचरेत् ५

रसात्युपयोगस्य हानिकर्तृत्वम्

रसातिसेवनाज्जन्तुस्सद्यो मृत्युमवाप्नुयात्
भवेयुर्व्याधयश्चास्य रसव्यासङ्गसंभवाः ६

संयोगविरुद्धानि

वृत्तरोहितराजीभिः वृत्ताक्षश्शकली तथा
मत्स्यश्चिलिचिमो नाम कूले चरति वारिणः ७
तं मत्स्यं वर्जयेदेकं दुग्धेनान्यांस्तु भक्षयेत्
पयसा भक्ष्यमाणस्तु नररक्तं प्रदूषयन् ८
रक्तव्यापत्तिजान्व्याधीन् मृत्युं चापि स यच्छति
श्वाविद्वराहं चैकत्र पयसा परिवर्जयेत् ९

वन्यमूलफलाहारस्तद्विधेन विरुद्ध्यते
अश्नीयात्पयसा यस्तु सद्यो मृत्युमवाप्नुयात् १०
भवेयुर्व्याधयश्चास्य शङ्खरोगगलग्रहाः
मधुना गोरसेनापि लिकुचं न च भक्षयेत् ११
बाधिर्यं वाऽप्यथान्ध्यं वा मृत्युं वा भक्षयन् ब्रजेत्

संस्कारविरुद्धम्

कपोतान् सर्षपैर्भृष्टान् पयसा न तु भक्षयेत् १२
मज्जाव्यापत्तिजान् व्याधीन्प्राप्नुयाद्धि तथा परम्
पयसा सर्पदष्टस्सन् खाद्यैस्सिद्ध्यति तादृशैः १३
क्रिमिजा व्याधयश्चास्य दृश्यन्ते यदि जीवति

सद्गर्भोत्पत्तिः

इह या स्त्री पुमांश्चैव हितजीर्णमिताशनौ १४
अनुदावर्तिनौ चैव स्यातां गर्भस्तयोः खलु
बलवान् वर्णवांश्चैव चक्षुष्मांश्च भवत्यथ १५
विपर्यये वर्तमानौ विपरीतमिहर्च्छतः

अध्यशनानशनयोर्व्याधिहेतुत्वम्

अजीर्णे त्वशनं यस्य जीर्णे चानशनं भवेत् १६
स तथोभयथा रोगान् दारुणान् प्राप्नुयान्नरः

रसोपयोगकालः

तस्माज्जीर्णे च पथ्याश्च मात्रावन्तोऽविरोधिनः
सर्व एव रसा भोज्याः युक्त्या संवृतधातुभिः १७
इत्याह भगवानात्रेयः

इति भेले द्वादशोऽध्यायः

## त्रयोदशोऽध्यायः

अथातो जनपदविभक्तीयं व्याख्यास्याम इति ह स्माह भगवानात्रेयः

### जानपदरोगप्रश्नः

कस्मिन् जनपदे रोगाः के भवन्त्यधिका इति
गुर्दालुभेकिना पृष्टो व्याचचक्षे पुनर्वसुः १

### जनपदेषु रोगविशेषाः

मत्स्यान्नभोजिनो नित्यं प्राच्याः स्युः कफपित्तिनः
श्लीपदं गलगण्डं च प्रायशस्तेषु दृश्यते २
नदीतोयगतान् मत्स्यान् भक्षयन्ति समुद्रजान्
प्रायशः कुष्ठिकास्तेन मनुष्या दक्षिणादिशि ३
मसूरयवगोधूमतिलकोद्दालसेविनः
भूयिष्ठमर्शसास्तेन काम्भोजादन्तजाः स्मृताः ४
मांसकामाः सुराकामाः स्त्रीकामास्साहसप्रियाः
प्रतीच्यास्तेन भूयिष्ठं दृश्यन्ते राजयक्ष्मिणः ५
तीक्ष्णोष्णानि हि बाह्लीकाः प्रायेणान्नानि भुञ्जते
अभिष्यन्दीनि मांसानि पानकान्यौदकानि च ६
प्रकृत्या चाप्यभिष्यण्णाः पार्वतोपत्यकास्सदा
तेन बाह्लीकदेशेषु प्रायो व्याधिर्बलासकः ७

### ऋतुव्यापत्तिजजनमारः

मेघेऽवर्षति वर्षासु हेमन्ते यत्र वर्षति
ऋतुव्यापत्तिसमये जनमारः प्रवर्तते ८

### तत्र चिकित्सा

तत्रोपवासी धृतिमान् रतो विप्राभिवादने
मन्त्रौषधरतश्चापि जनमारात् प्रमुच्यते ९

शारदज्वरः

सूर्योपतापात्सहसा वर्षान्ते पित्तमीर्यते
शरदि प्रायशस्तेन ज्वरो भवति देहिनाम् १०

चतुष्पदादिषु ज्वरस्य नामानि

गवां च चारणाख्यश्च चतुष्पाच्छ्वापदेषु च
इन्द्रजालश्च मत्स्येषु शकुनानां प्रमीलकः ११
चित्रकस्सर्वधान्येषु दवो मूलफलेषु च
हस्तिनां पाकलश्चैव ज्वर इत्यभिधीयते १२
उत्कर्णकस्तथाश्वेषु तेजस्सर्वामयेषु च
सर्वत्र वसति ह्येष एष चान्तक उच्यते १३
तं धूमकेतुं प्रत्यक्षं क्षिप्रं प्रशमयेज्ज्वरम्

असात्म्यगन्धजोपद्रवौ

असात्म्यं गन्धमादाय वातो यत्राति वीज्यते १४
तत्र मर्त्येषु सामान्यः प्रतिश्यायः प्रवर्तते
तथा बतालिका नाम पिटका चास्य जायते १५
कक्षायामूरुमूले च पाणिपादतलेषु च
कण्ठे वा श्रोत्रमाश्रित्य बस्तौ वा हृदयेऽपि वा १६
त्वरमाणश्चिकित्सेत प्रवृद्धा मारयेन्नरम्
पित्तश्लेष्मसमुत्थानां वातशोणितमूर्च्छिता १७
बतालिकेति तामाहुर्यत्नवांस्तत्र जीवति
इत्येतत्सम्यगुद्दिष्टं सर्वं यद्यच्च चोदितम्
ऋषिभ्यः परिपृच्छद्भ्यः प्रश्नजातं यथाक्रमम् १८
इत्याह भगवानात्रेयः

इति भेले त्रयोदशोऽध्यायः

## चतुर्दशोऽध्यायः

अथातः चिकित्साप्राभृतीयं व्याख्यास्याम इति ह स्माह भगवानात्रेयः

### शोधने नियमः

चिकित्साप्राभृतो विद्वान् विद्यात् संशोधने विधिम्
न च धामार्गवं दद्यात्स्नेहस्वेदानुपस्कृते १
यो हि संशोधनं पीत्वा सकषायाणि सेवते
तस्य तानि तदा जीवं हरन्त्यनु हुताशनम् २
दारु शुष्कमिवास्विन्नं नाम्यमानं यथा भवेत्
तथा विरेचनं हन्यात्स्नेहस्वेदानुपस्कृते ३

### विरेचने विधिः

स्नेहस्वेदोपपन्नं तु छर्दितं भावितं पुनः
विरेचनस्य सिद्ध्यर्थं पूर्वमास्थापयेद्भिषक् ४
अजीर्यदथ रूक्षं हि विरेचनमथोल्लिखेत्

### हीनवीर्यादिभेषजनिषेधः

ओषधीर्हीनवीर्याश्च मात्राहीनाश्च वर्जयेत् ५
अतिमात्रं हि भैषज्यं जीवं हरति देहिनाम्

### चिरेचने कालाद्यपेक्षा

तस्मात्कालं बलं मात्रामृतुं विद्याद्विरेचने ६

### विरेचनफलम्

यथा वृक्षस्य पुष्पेषु पलाशेषु फलेषु च
शीर्णेष्वन्यानि रोहन्ति तथा व्याधिरनिर्हृतः ७
यथा मूले तरोश्छिन्ने म्लायत्यग्रं न संशयः

एवं विरेचिते व्याधिरुपशाम्यति देहिनाम्  ८

विरेचितस्य पथ्यम्

उदकं चोदमन्थं च मत्स्यान्मांसतिलानपि
गुरु चान्नं न भुञ्जीत स्नेहसन्तर्पणानि च  ९

रेचितस्य दारुणभक्तजव्यापत्प्रतिक्रिया

विरेचनं तु यः पीत्वा दारुणं रूक्षिते गुदे
दारुणं भक्तमश्नाति तमामिषरसेन वै  १०

दोषाणां कोष्ठप्राप्तिः

तद्यथा ह्युदकं निम्नं स्थलादध्यवरोहति
स्नेहितस्य तथा दोषाः कुक्षिमायान्ति सर्वशः  ११

दोषाणां सुशोध्यत्वम्

स्नेहनैर्व्याधितस्थानाद्रसैश्चाभ्यधिकीकृताः
स्वेदैर्मृदूकृतास्सन्तः स्रोतसा च समागताः  १२
मृदुसर्वाङ्गकोष्ठस्य भेषजैश्शुचिभिस्तदा
दोषास्सुनिर्हरा जन्तोर्भवन्तीति विनिश्चयः  १३
एष हेतुर्विरेकेषु छर्दनेष्वेष एव तु
एष हेतुर्निरूहेषु शिरसश्च विरेचने  १४
बहुस्निग्धो विरिक्तश्च यो रसैर्नोपपाद्यते
भेषजैरप्युपस्तब्धः सोऽतिमात्रं विपद्यते  १५

अनागताबाधप्रतिषेधप्रतिज्ञा

वक्ष्यामि च क्रियामन्यामजातव्याधिनाशिनीम्

ऋतुविशेषेण द्रव्यविशेषसेवनविधिः

मधु सेवेत वर्षासु सर्पिः शरदि  चाचरेत्  १६

सम्मिश्रं गराडकेनैव वारुर्णीं शिशिरे पिबेत्
मार्द्वीकं तु वसन्ते निदाघे त्तीरमाचरेत् १७

कुल्माषगुणाः

कुल्माषा वातला रूत्ता गुरवो भिन्नवर्चसः
शिरसोऽन्तस्तर्पयन्तः श्लेष्मणश्च विशोषणाः १८
उदावर्ताञ्जयन्त्येते स्निग्धत्वाद्गौरवादपि
रौत्त्यात्त्रिधा सा जननात् श्लेष्मन्नाकलास्तथा १९

यथर्तुद्रव्यसेवनफलम्

एवं तु वर्तमानानामायुर्वृद्धिमवाप्नुयात्
नृणां समाधिपूर्णानामदीनमनसां तथा २०
इत्याह भगवानात्रेयः

इति भेले चतुर्दशोऽध्यायः

पञ्चदशोऽध्यायः

अथातस्तिस्त्रैषणीयमध्यायं व्याख्यास्याम इति ह स्माह भगवानात्रेयः

तिस्त्र एषणाः

प्राणैषणा स्यात्प्रथमा द्वितीया तु धनैषणा
धर्मैषणा तृतीया तु पुरुषस्य भवत्यथा १

प्राणैषणा

तत्र प्राणैषणां पूर्वं समापद्येत मानवः
धर्मार्थकामप्राप्तिर्हि सद्भिः प्राणैः प्रपद्यते २
धर्मादीनामवाप्तिश्च पुरुषार्थः परः स्मृतः
तस्माच्छरीरं प्रयतः परिरत्तेद्धि शास्त्रतः ३

धनैषणा

धनैषणां द्वितीयां तु समापद्येत मानवः
पापीयो नास्त्यतः किञ्चिद्यथा जीवन्नृते धनात् ४
धर्मकामौ न संपीडय तस्माद्वित्तमुपार्जयेत्
ज्वररोगादिका येन निरस्येदापदो बुधः ५

धर्मैषणा

धर्मैषणा तृतीयां तु समापद्येत मानवः
अवश्यमधिगन्तव्या देहभेदे वरा गतिः ६
प्राणाद्यनुपरोधेन तस्माद्धर्मं चरेद्बुधः
त्रिवर्गानुपरोधेन तत्प्राप्तिर्हि नरे हिता ७
इत्येतास्सम्मता लोके व्याख्यातास्तिस्त्र एषणाः
यथोक्तास्ताः प्रयुञ्जानः परत्रेह च मोदते ८

मलानां संभवः स्वभावः निर्हार्यत्वं च

उपस्तम्भास्तु चत्वारो यदाहारश्चतुर्विधः
शरीरे च बलं चैव मलं तेभ्यः प्रजायते ९
शरीरमात्मनो मर्म मलमात्मबलं पुनः
रोगास्तस्यातिवृद्ध्यां च वातपित्तकफात्मकाः १०
मलं तु रोगो भवति वैषम्यं धातुभिर्गतैः
मलाच्चाप्येति वैषम्यं तस्मात्तमभिनिर्हरेत् ११
इत्याह भगवानात्रेयः

इति भेले पञ्चदशोऽध्यायः

षोडशोऽध्यायः

अथातो वातकलाकलीयं व्याख्यास्याम इति ह स्माह भगवानात्रेयः

दोषप्रश्नः

कतमोऽभ्यधिको दोषो न्यूनश्चैवेति तत्वतः
कृष्णात्रेयं पुरस्कृत्य कथाश्चक्रुर्महर्षयः १

वायोः प्राधान्यं तत्कर्माणि च

वातं तत्राधिकं कश्चित्प्राहान्यमुपहन्ति यः
यावत्तिष्ठति वातो हि देही तावत्तु जीवति २
स हि गर्भाशये शुक्लं विस्रंसयति योषितः
वातः स्त्रिया रजो हन्ति वन्ध्या भवति तेन सा ३
न स्त्रियः पुरुषा वापि वन्ध्यास्सन्तीह जन्मना
आशये शीतलो वापि वातश्शुष्केन्द्रियस्तथा ४
वातः सदिन्द्रियो वापि वातो हीनेन्द्रियस्तथा
आलोकितं निमिषितं यच्च किंचिद्विचेष्टितम् ५
अशीतिश्चामया नृणां नावातात्संभवन्ति हि
वाताद्धि कुब्जाः कुणिनः खंजा गृध्रसिनस्तथा ६
हीनाङ्गा ह्यधिकाङ्गाश्च भवन्त्यन्ये च तद्विधाः
स्थितिः प्राणभृतां चैव --

बाह्यवायोः कर्माणि

-- सरितां चैव निःस्वनाः ७
पृथिव्याश्चलनं चैव वातादेव प्रवर्तते
वातेन धूमो भवति धूमादभ्रं प्रजायते ८
अभ्राद्विमुच्यते वारि बीजानां सम्भवस्ततः
उल्कानिपातः स्तनितं विधुत्तारागणस्य च ९
विद्युतां च बलं चैव वातादेव प्रवर्तते
अग्निर्ज्वलति वातेन पुण्यानां हविषां पतिः १०

स्रवन्ति चापगास्तेन पृथिवीं प्लावयन्ति च
वायुस्तत्राधिको देवः प्रभवस्सर्वदेहिनाम् ११

शरीरे चरतः वायोर्गुणान्तराणि

योन्यां रेतः प्रसिक्तं च वायुना युज्यते गुणैः
एष पित्तं कफं चैव हन्यादन्यतरं तयोः १२
आदाय कुपितो वायुः देहे विप्रतिपद्यते
एवं व्यानमुदानं च समानं च प्रचक्षते १३
देहे बहुविशेषित्वादपानं प्राणमेव च
ऊर्ध्वगोऽत्राप्युदानः स्याद् व्यानस्तिर्यग्विवृद्धिकृत् १४
प्राणो न्यस्यत्यपानं तु प्रवर्तयति देहिनाम्
समानो धारणश्चैव संगृह्णाति स देहिनाम् १५
इन्द्रियाणि मनश्चैव भूतात्मानं च सम्मतः
विशेषस्त्वपरो वायुरपान इति संज्ञितः १६
शोषणश्चरणश्चैव तथा विचरणः स्मृतः
वायुः पञ्चसु भूतेषु भूतं परममुच्यते १७
तानि वायुनिबद्धानि वायुस्सर्वत्र सर्वदा
मूत्रेन्द्रियपुरीषाणां वायोरुत्सर्ग एव च १८
पाचनाच्चैव भुक्तस्य कर्मापानस्य शिष्यते
प्राणः प्रीणाति भूतानि प्राणो जीव इति स्मृतः १९
व्यानाच्छरीरचेष्टा च निमेषोन्मेषणानि च
यच्चान्यदूर्ध्वगं जन्तोस्तदुदानस्य चेष्टितम् २०
क्षवथुं हिक्कितं कासमुच्छ्वासं भाषणं तथा
गुदमाध्मापयत्येष देहं यस्य च सर्वशः २१
एषु प्रतिष्ठितो वायुरपान इति संज्ञितः

इत्येभिरीदृशैश्चान्यैर्हेतुभिस्तत्त्वदर्शिभिः
भूतेभ्योऽभ्यधिकं वातं लक्षयाम शरीरिणाम्  २२
इत्याह भगवानात्रेयः
इति भेले षोडशोऽध्यायः

सप्तदशोऽध्यायः

अथातो दशप्राणायतनीयं व्याख्यास्याम इति ह स्माह भगवानात्रेयः

आहारस्य प्राणप्रीणकत्वम्

चतुर्विधमथो भुक्तं दशधा प्राणमृच्छति
ऊष्मस्वेदशकृन्मूत्रैस्तथा वातादिभिस्त्रिभिः  १
स्त्रियाः स्तन्येन शुक्लेन शोणिते न च वाप्यथ
इत्येभिर्दशभिः प्राणः स्थिरीभवति देहिनाम्  २

समासमाहारस्य स्वास्थ्यास्वास्थ्यहेतुत्वम्

ईहतेऽमृतवद्वृत्तिं वातपित्तकफैस्त्रिभिः
आहारसाम्ययोगाद्धि वैषम्ये व्याधयः स्मृताः  ३

भिषग्द्वैविध्यम्

इह द्वौ भिषजौ विद्यात् ज्ञश्चैवाज्ञश्च देहिनाम्

ज्ञभिषक्

तत्र ज्ञः सूत्रवान्यः स्यात्सूत्रार्थेन विचक्षणः  ४
पञ्चाश्रयान्कषायांश्च भोजनं चतुराश्रयम्
चतुःश्रेष्ठांस्तथा स्नेहानामयांश्चातुराश्रयान्  ५
चूर्ण प्रदेहान् विविधान् यवागूंश्चाष्टधा स्मृता
द्वादशान्नानि पथ्यानि प्रायश्चित्तद्वयं तथा  ६
त्रिंशतं चोपनाहानां स्थानेष्ववष्टासु तत्त्वतः

सूत्रस्थानं चिकित्सा च त्रिंशत्त्रिंशदिहोच्यते ७
अष्टौ निदानान्युक्तानि विमानानि तथैव च
शारीराण्यष्ट गात्राङ्गप्रत्यङ्गं यत्र वर्णितम् ८
सिद्धयो द्वादश प्रोक्तास्तथा कल्पेन्द्रियाणि च
एतद्विंशशतं प्रोक्तं मूलिन्यः यत्र षोडश ९
एकोनविंशतिर्ज्ञेयाः फलिन्यः क्षीरिणीत्रयम्
आयुर्ज्ञानमरिष्टिभ्यः साध्यासाध्यचिकित्सिताः १०
रोगज्ञानं निदानेभ्यो देशकालौ विमानतः
शारीराद्धातुसंघातं प्रकृतिं धातुसात्म्यताम् ११
अन्यदेवंविधं यच्च शास्त्रे किंचिदपि श्रुतम्
भिषग्यो वै विजानाति स ज्ञः अज्ञं तु निबोधत १२

अज्ञभिषक्

योऽन्नकाले यवागूं तु सूपकाले तथा रसम्
यूषकालेऽथ मांसं तु शोध्येषु स्तम्भनानि च १३
विरेचनीये वमनं निरूह्ये चानुवासनम्
विपर्ययेण योऽन्यद्वा कुरुते सोऽज्ञ उच्यते १४

शास्त्रतत्त्वज्ञानार्जनोपदेशः

योगेन विद्यामादद्यात्तस्मात्तत्त्वदिदृक्षया
यथा तमसि दीपः स्यात्तथा शास्त्रं प्रकाशकृत् १५
इत्याह भगवानात्रेयः

इति भेले सप्तदशोऽध्यायः

अष्टादशोऽध्यायः

अथातोऽन्नरक्षीयं व्याख्यास्याम इति ह स्माह भगवानात्रेयः

नग्नजित्प्रश्नः

गान्धारभूमौ राजर्षिर्नग्नजित्स्वर्गमार्गदः
संगृह्य पादौ पप्रच्छ चान्द्रभागं पुनर्वसुम्  १
न च स्त्रीभ्यो न चास्त्रेभ्यो न भृत्येभ्योऽस्ति मे भयम्
अन्यत्र विषयोगेभ्यः सोऽत्र मे शरणं भवान्  २

पुनर्वसूपदेशः

एवमुक्तस्तथा तस्मै महर्षिः पार्थिवर्षये
विषयोगेषु विज्ञानं प्रोवाच वदतां वरः  ३

विषदुष्टान्नलक्षणम्

विषेण सह संसृष्टमन्नपानं चतुर्विधम्
यानि दुष्टानि रूपाणि तानि मे गदतः शृणु  ४
प्रतिकूलमिवाभाति फेनिलं विप्लुताकृति
शुक्लं भवति यत्क्षिप्रं नैनं श्लिष्यन्ति मक्षिकाः  ५
धूमश्चास्य गतः श्यामो रक्तः कृष्णोऽथ पीतकः
प्रादुर्भवति तद्विद्याद् दुष्टमन्नं प्रचक्षणः  ६

विषदुष्टमद्यादौ

नीलपीतासिता राज्यो भवन्तीन्द्रायुधोपमाः
मध्ये मद्येषु सर्वेषु ये चान्ये पानसंश्रयाः  ७

विषाक्तानुलेपने

अनुलेपनदोषे तु त्वगस्य बहुलीभवेत्
सर्वव्यापत्तिमाप्नोति क्लिद्यते मांसमेव च  ८

विषसंसृष्टमाल्ये

माल्यं तु श्यावपुष्पं स्यान्म्लानं कालं च दृश्यते

चूर्णयोगावकीर्णं तु रेणुनेवावृतं भवेत् ९

विषदुष्टकेशकूर्चे

रोमाणि परिशीर्यन्ते केशभूमिश्च धूप्यते
कूर्चस्पर्शश्च दुःखः स्याज्जटिलाश्चास्य मूर्धजाः १०

विषदुष्टाञ्जने

वेदनां चैव कण्डूं च कुरुते दुष्टमञ्जनम्
अश्रु स्रवति नात्यर्थमन्धकारं च पश्यति ११

विषदुष्टधूमे

धूमदोषे विरेकः स्यादत्यर्थं शिरसश्च रुक्
परिदाहश्च भेदश्च गन्धज्ञानमसाधु च १२
न सम्यग्वेत्ति च रसानरणीव च मथ्यते
इति धूमस्य रूपाणि सर्वाण्येतानि लक्षयेत् १३

विषदुष्टवस्त्रे

दुष्टे वाससि लिङ्गानि सूचीभिरिव तुद्यते
दह्यते मुञ्चति स्वेदं मूर्छत्यप्यवलीयते १४

विषाक्ताभरणे

दुष्टे त्वाभरणे दाहः स्वेदः कण्डूश्च जायते
कुरुते गात्रवैवर्ण्यं स्वयं चाभाति निष्प्रभः १५

विषदुष्टासने

दुष्टमासनमास्थायी विमूढो विपतेन्नरः
सीदत्युच्छूनवृषणो न चोत्थातुं सही भवेत् १६
ऊरू चास्य प्रवेपेते सदोषासनसेवया

विषदुष्टशय्यायां

दुष्टे तु शयने रूपं सुप्तिः कण्डूयते भृशम् १७
स्वेदश्च विषमत्येति रोमकूपैः समन्ततः
तुद्यमानः पुनः शय्यां मन्यते जन्तुभिर्वृताम् १८

विषदुष्टच्छत्रे

सुदिने दुर्दिनं चापि दुर्दिने सुदिनं तथा
स्याद् भूश्च दुष्टपर्यन्ता दुष्टच्छत्रनिषेवणात् १९

विषदुष्टश्मश्रुसंस्करणे

कुरुते रूपवैवर्ण्यं प्रदुष्टश्मश्रुवर्धकः
शिशिरे मुञ्चति स्वेदं ग्रीष्मे शीतातुरो भवेत् २०
प्रवेपते प्रव्यथते गद्गदा च सरस्वती
स्यन्दनौ च विवर्णौ च परुषौ दशनच्छदौ २१

विषदुष्टोपानहि

उपानहौ यदा दुष्टौ तदा कण्डूः प्रजायते
प्रस्विद्यते पादतलं तथा चिमचिमायते २२

विषार्तलक्षणम्

अथेह विषपीतस्य विषदग्धस्य वा पुनः
दिग्धविद्धस्य वा राजन् रूपाणीमानि लक्षयेत् २३
गात्रोद्वेष्टनमाप्नोति वेपते व्यथते नरः
कम्पते चापि कण्ठोऽस्य निःस्वनं ष्ठीवते मुहुः २४
जिह्वा चास्य जडीभूता शूलैरिव च तुद्यते
व्याहर्तुं च न शक्नोति शर्म चैव न विन्दति २५
केशान्तं शीर्यते चास्य नखाः श्यामीभवन्ति च
अङ्गुष्ठाङ्गुलयः कृष्णाः हस्तपादतलैः सह २६
शरीरं पाण्डुतामेति विषार्तस्यैव देहिनः

सोऽकृत्यकरतामेति भग्नो रथ इवाहवे २७

चिकित्साकरणोपदेशः

तस्मात्कुर्यात्क्रियां वैद्यः षोडशागदकोविदः
ह्रिया युक्तः कुलीनश्च धर्मज्ञो दीर्घदर्शनः २८
अर्थाश्चास्य प्रतिष्ठेया विधिवत्संभृता गृहे
चिकित्सितेषु या प्रोक्ता विषप्रशमने हिता २९
इत्याह भगवानात्रेयः

इति भेले अष्टादशोऽध्यायः

एकोनविंशोऽध्यायः

अथातो विधिशोणितीयं व्याख्यास्याम इति ह स्माह भगवानात्रेयः

वारुण्याः रक्तदूषकत्वम्

विधिना शोणितं जातं सेवमानस्य वारुणीम्
प्रदुष्यति विदाहेन ततो रोगाय कल्पते १

मद्यदोषाः

सर्वं मद्यमचक्षुष्यमपौरुष्यं तथैव च
उपहन्ति बलं नृणामनायुष्यं च कीर्त्यते २

युक्तियुक्तमद्यगुणाः

यस्तु तद्भजते युक्त्या न तं व्याधिः प्रसज्जते

अतिपीतमद्यदोषौ

अतिपीतं च तद्विद्धि तत्राहृद्यं बलाय न ३

पानव्यवस्था

न नक्तं तु पिबेद्युक्त्या पानं तस्माद्विचक्षणः

मद्यप्रशंसा

बलवर्णकरं ह्येतदारोग्यकरणं परम् ४
स्नेहपाने तथा मात्राबस्तिकर्मणि चाप्यथ
क्षारे च लवणे चैव न सुरा प्रतिषिध्यते ५
बृंहणं नेदृशं किञ्चिद्यथान्नसहिता सुरा
तां तु रूक्षां विशेषेण नातिमात्रं समाचरेत् ६
वातेन श्लेष्मणा चैव सम्प्रदुष्टां सुशीतला
विशोष्य दीपयत्येषा ग्रहणीं वै शरीरिणाम् ७
यस्य कोष्ठगतो वायुर्दुःखमुत्पादयेद् भृशम्
उदावर्तं सहृद्रोगं वातगुल्ममथापि च ८
अथवा सर्वगात्रेषु मारुतः प्रत्यवस्थितः
युक्तां प्रसन्नां पिबतः स क्षिप्रमुपशाम्यति ९
हन्त्यासवः कफं पित्तं पुरीषं च भिनत्त्यथ
मधु पित्तमरिष्टस्तु वातार्तिं शमयत्यथ १०
बस्तिः शुद्ध्यति पानेन शर्करा चापि भिद्यते
तेजो बलं च हर्षश्च युक्त्या पानेन वर्धते ११
कामं दीपयते स्वादुर्बृंहणो न विपद्यते
तस्मात्पानगुणान् बुद्ध्वा यथायोगं समाचरेत् १२
इत्याह भगवानात्रेयः

इति भेले एकोनविंशोऽध्यायः

विंशोऽध्यायः

अथातोऽर्थेदशमूलीयं व्याख्यास्याम इति ह स्माह भगवानात्रेयः

हृदयं धमन्यश्च

अर्थ इत्याह हृदयं तस्मिन् धमनयो दश

ऊर्ध्वं चतस्रो द्वे तिर्यक् चतस्रश्चाप्यधः क्रमात् १
ताभ्यो मूलसिरास्तिर्यग्भिद्यन्ते नैकधा सिराः
तस्मात्तदर्थविज्ञानं स्मृतियोगं च मानसम् २

रससंवहनम्

हृदो रसो निःसरति तस्मादेति च सर्वशः
सिराभिर्हृदयं वैति तस्मात्तत्प्रभवाः सिराः ३

हृदयं प्राणाधिष्ठानम्

हृदि प्राणाश्च चक्रस्थाः विमाने कर्णिका यथा
मर्माभिघातं तेनात्र सहते हृदये न तु ४

हृदयस्वरूपम्

पुण्डरीकस्य संस्थानं कुम्भिकायाः फलस्य च
एतयोरेव वर्णं च बिभर्ति हृदयं नृणाम् ५
यथा हि संवृतं पद्मं रात्रावहनि पुष्यति
हृत्तथा संवृतं स्वप्ने विवृतं जाग्रतः स्मृतम् ६

कायस्याबादिपोष्यत्वम्

आपो महारसा विद्यादन्नं चैव महौषधम्
महाप्रलेपनं तत्र तेजश्चैव महत्परम् ७
रसानामुदकं योनिरन्नं वृत्तिः परा स्मृता
विक्लिन्नमुपसन्धत्ते पुनः कायं शरीरिणाम् ८

अन्नाद्युत्पत्तिः

सूर्यांशं धूममित्याहुर्यतोऽभ्रप्रभवः स्मृतः
अभ्राद्वर्षं ततोऽन्नानि तस्मात्तेजो महत्परम् ९

आभ्यन्तरबाह्यमलानि

स्वेदश्चास्त्रं च मूत्रं च फेनं चाभ्यन्तरं मलम्
अवश्यायहिमाम्बूनि बाह्यानि परिचक्षते १०
हृदयो - - -

इति भेले विंशोऽध्यायः

एकविंशोऽध्यायः

स्नेह्याः

- - - विरेच्यांश्चैव मानवान्
आस्थाप्याननुवास्यांश्च वातव्याधींश्च सर्वशः

रूक्षणीयाः

विरूक्षयेदतिस्निग्धं कृमिकोष्ठिनमेव च
रूक्षस्तम्भ्यान् प्रमेहांश्च कफरोगांश्च सर्वशः १

वम्याः

वामयेच्छ्लेष्मकासे च प्रतिश्याये च मानवान्
हृद्रोगे चैव कुष्ठे च सर्वश्लेष्मामयेषु च २

विरेच्याः

विरेचयेद्धि कुष्ठानि ज्वरान्विस्फोटकानि च
दाहं विचर्चिकां चैव वातव्याधींश्च सर्वशः ३

अनुवास्याः

अन्वासयेत्कटीपृष्ठपार्श्वरोगान् विचक्षणः
उद्वेष्टनं च गुल्मं च वातव्याधींश्च सर्वशः ४

आस्थाप्याः

आस्थापयेद्धि गुल्मांश्च मूत्राघातोदराणि च

अपस्मारांश्च कुष्ठं च वातव्याधींश्च सर्वशः ५

स्वेद्याः

स्वेदयेत हनुस्तम्भमायाममपि चार्दितम्
पार्श्वरोगं च गुल्मं च वातव्याधींश्च सर्वशः ६

स्तम्भनीयाः

स्तम्भयेद्रक्तपित्तं च विसर्पं च विचक्षणः
दाहं विस्फोटकांश्चैव पित्तव्याधींश्च सर्वशः ७

रोगाणां दोषभेदेनाशयातिदेशः

इति पित्तकफोत्थान्वै विद्यादामाशयात्मकान्
पक्वाशयसमुत्थांश्च वातरोगान्विनिर्दिशेत् ८

आशयभेदेन शोधनम्

वामयेद्वमनीयांस्तु समीक्ष्यामाशयान्नरान्
विरेचयेद्विरेच्यांस्तु तथा पक्वाशयाश्रयान् ९
इत्याह भगवानात्रेयः

इति भेले एकविंशोऽध्यायः

## द्वाविंशोऽध्यायः

अथातः स्वेदाध्यायं व्याख्यास्याम इति ह स्माह भगवानात्रेयः

अष्ट स्वेदाः

संकरं प्रस्तरं सेकं नाडीं द्रोणिं जलानि च
उदकोष्ठं कुटिं चैव स्वेदमष्टविधं विदुः १

स्वेदनद्रव्याणि

पाषाणभस्मसिकतातुषपांसुबुसानि च

अजाविगोपुरीषाणि प्रावाराणि प्रवातिकाः २
पयांस्यम्लानि धान्यानि गिरिसाधारणानि च
सर्वाणि मद्यमांसानि लवणानि तथैव च ३
विधिवद्योजयेत्स्वेदे कालेयागरुरूषितान्

स्वेदनविधिः

भिषग् बलाबलं दृष्ट्वा बलिनो दुर्बलानपि ४
कुथकम्बलकौशेयैः प्रवेणयजिनकादिभिः
किटिजैराविजैर्वस्त्रैः प्रच्छाद्य स्वेदयेन्नरान् ५

स्वेदसम्यग्योगः

स्पर्शसौख्यमवैवर्ण्यं स्वेदोऽङ्गेषु च मार्दवम्
शीताभिनिर्गमश्चैव सम्यक् स्विन्नस्य लक्षणम् ६

स्वेदातियोगः

पित्तप्रकोपो दाहश्च तृष्णा मूर्छा विलायनम्
स्वेदद्वेषाऽङ्गरागश्चेत्यतिस्विन्नस्य लक्षणम् ७

स्वेदायोगः

उद्वेष्टनं दारुणता गुरुत्वं स्तब्धगात्रता
मरुतश्चाप्रसिद्धिश्च न तत्स्विन्नस्य लक्षणम् ८

स्वेदायोगे कर्तव्यम्

अस्विन्ने स्नेहनं कृत्वा ततः स्वेदैरुपाचरेत्

स्वेदप्रशंसा

स्नेहपूर्वप्रयुक्तो हि स्वेदो जयति मारुतम् ९
शुष्काण्यपि हि काष्ठानि स्नेहस्वेदोपपादनैः
नमयन्ति यथान्यायं किं पुनर्जीवतो नरान् १०

स्वेदातियोगे कर्तव्यम्

अतिस्विन्ने विशेषेण कारयेच्छीतलां क्रियाम्
अथवा शीतलैर्वाथ क्षीरैः सिंचेद् घृतेन वा ११

अस्वेद्याः

पिपासुं वा न शक्तं च गर्भिणीं कुक्षिरोगिणीम्
सर्वांश्च पित्तजान् व्याधीन् कः स्वेदैः समुपाचरेत् १२

स्वेदवर्णनप्रतिज्ञा

ये स्वेदाः पूर्वमुद्दिष्टास्तानप्येकैकशः शृणु

संकरस्वेदः

बिल्वाग्निमन्थश्योनाकं काश्मरीं पाटलां तथा १३
यवान् कुलुत्थान् कोलानि स्थाल्यामासिच्य साधयेत्
यवपाकानि विज्ञाय सुखोष्माण्यवतारयेत् १४
ततोऽभ्यक्तस्य विधिवत्स्वेदनीयस्य देहिनः
गात्रं गात्रैकदेशं वा सुखोष्णैश्छादयेच्छनैः १५
ततः प्रच्छादयेद्भूयः कौशेयाजिनकाम्बलैः
सङ्करस्त्वेष विज्ञेयः स्वेदानामग्र्य उच्यते १६

प्रस्तरस्वेदः

एतान्यन्यानि च भिषक् स्वेदद्रव्याणि संहरेत् १७
प्रकीर्य तानि शयने कम्बलेनावगुण्ठितम्
स्वभ्यक्तं शाययेज्जन्तुं स्वेदं प्रस्तरमादिशेत् १८

सेकस्वेदः

वसातैलघृतक्षीरमूत्रमस्त्वम्लकाञ्जिकैः
सुखौष्णैः सेचयेत्स्वेद्यं सेकः स परिकीर्तितः १९

नाडीस्वेदः

नाडीं गजकराकारां त्रिहस्तां तादृशीं तथा
धान्याम्लद्रवपूर्णायां धान्यां सन्धाय लेपयेत् २०
तां त्रिहस्तां समाहृत्य स्वभ्यक्ताङ्गस्य देहिनः
प्रच्छन्नगात्रस्य तु तां नाडीमुद्धाटयेद् भिषक् २१
नाडीस्वेदः समाख्यातः यावत्प्रस्वेदनादिति

द्रोणिस्वेदः

कण्ठावगाहामच्छिद्रां तावदेवायतां समाम् २२
द्रोणिं पायसनिष्क्वाथकृसरक्षीरपूरिताम्
कृत्वा तस्यां सुखोष्णायां स्वभ्यक्तं वातरोगिणाम् २३
ज्ञात्वावगाहयेत्तावद्यावत्स्वेदोद्गमो भवेत्

सलिलस्वेदः

तप्तैः पात्रयुतैर्वापि शुद्धैर्वा सलिलैर्भिषक् २४
स्वभ्यक्तगात्रस्य ततः सलिलस्वेदमाचरेत्

उदकोष्ठस्वेदः

ईदृशैरेव सलिलैः कटाहे चार्धपूरिते २५
प्रवेश्य स्वेदयेत्स्वेद्यमुदकोष्ठः प्रकीर्तितः

कुटिस्वेदः

सुलिप्तां संवृतद्वारां यन्त्रितां कारयेत्कुटिम् २६
ह्रस्वागारमितां हृद्यां शिलास्तीर्णतलां दृढाम्
तस्याश्चुल्ल्यौ च कर्तव्ये अधस्तात्पार्श्वसंवृते २७
तत्र स्थाल्यौ प्रतिष्ठाप्य सर्वतः परिबृंहयेत्
स्थाल्यौ तप्ते कुटिश्चापि यदा तेनोष्मणा तदा २८
सर्वाङ्गरोगिपुरुषः प्रविशेत्स कुटिं ततः

स्वभ्यक्तगात्रः सुस्विन्नः क्षौमप्रावृतलोचनः २९
ततः प्रवेशयेत्तत्र शीताम्बुमणिकां शुभाम्
क्लान्तः शीताम्बुना तत्र स्पर्शसौख्यमवाप्नुयात् ३०
कुटिस्वेद इति ज्ञेयः सद्यो रोगनिवर्तकः

अनाग्नेयस्वेदः

स्वेदोऽग्निहीनः क्षुत्तृष्णाभयं क्रोधस्तथाहवः ३१
निवातमध्वसन्तापौ गुरुप्रावरणं तथा

स्वेद्याः

स्वेद्यास्तु वातकफजा वातजाः कफजास्तथा ३२

वातिकानां स्वेदविधिः

रोगास्तत्रोष्मलवणस्निग्धाम्लैरेव वातजाः

कफात्मनां स्वेदविधिः

करीषबुसपाषाणबाष्पाङ्गारैः कफात्मकाः
स्वेद्यास्तु स्निग्धरूक्षाभ्यां ज्ञात्वा व्याधिबलाबलम् ३३
इत्याह भगवानात्रेयः

इति भेले द्वाविंशोऽध्यायः

त्रयोविंशोऽध्यायः

अथातो गाढपुरीषीयं व्याख्यास्याम इति ह स्माह भगवानात्रेयः

गाढपुरीषजा विकाराः

गाढं पुरीषं ग्रथितं शुष्कं वातसमीरितम्
तेनास्यापिहितं स्रोतः श्वयथुं कुरुते गुदे १
तस्यैव कुपितो वायुरूर्ध्वं जन्तोः प्रपद्यते

पार्श्वे श्रोरायां च पृष्ठे च हृदये चावतिष्ठते २
शिरश्चाप्यवसंगृह्य विकारान्कुरुते बहून्
बाधिर्यं तिमिरं चापि प्रतिश्यायमथापि च ३
अथ पित्तं कफं वा स्वात्स्थानाच्चयावयतेऽनिलः
ततोऽस्य धावतो दोषैर्दुष्यन्ति च रसादयः ४
ततो ज्वरोऽस्य बलवान् पाराडुत्वं चापि जायते
श्वयथुश्च भवेदस्य ग्रहणी च प्रदुष्यति ५

गाढवर्चसः वर्ज्यानि

तस्माद्दारुणकोष्ठस्तु गाढवर्चाश्च यो भवेत्
रूक्षमन्नं म्परिहरेन्न चैनमवस्त्रंसयेत् ६

गाढवर्चसः योज्यानि

स्निग्धान्यन्नानि हृद्यानि मांसानि विविधानि च
कुलुत्थरसयुक्तानि प्रदद्याद्देहिने सदा ७
आस्थापनं वातहरं तैलं चाप्यनुवासनम्
न भवन्ति विकारा हि नरस्य प्रतिकारिणः ८

वमनविरेचनानर्हाः

अथ यः कलिलश्च स्यात्प्रजाकामश्च मानवः
उत्कृष्टतारदारिश्च कर्महिनस्तथैव च ९
अथ स्थूलकृशश्चैव वैद्यमानि च यो भवेत्
तथैकलोकयात्रिकां मोत्रियान्न च तद्विजान् १०
सुभगान् सुकुमारांश्च गर्भिणीं तरुणि तदा
दुर्दिलांश्च यदु प्राप्तान् कासिनः साति नारिणः ११
पाराडुराजैव कर्णां च सततं यश्च कासति
पाययेच्च भिषक्तापैर्वमनं सविरेचनम् १२

इत्याह भगवानात्रेयः

इति भेले त्रयोविंशोऽध्यायः

इति भेले चतुर्विंशोऽध्यायः

पञ्चविंशोऽध्यायः

अथातः ऋतुविभागीयं व्याख्यास्याम इति ह स्याम भगवानात्रेयः

स्वस्थस्य रेचने सुश्रोतृमतम्

सुश्रोता नाम मेधावी चान्द्रभागमुवाच ह
न पातव्यमरोगेण सुखकामेन रेचनम् १
अनीरितानां दोषाणां हरणं न प्रशस्यते
अवस्थितानां च्यवनं प्राणापायाय मे मतम् २
यथा व्यालाग्निशस्त्राणां स्पर्शः स्वस्थे तथौषधम्
तस्मान्न पाययेत्स्वस्थं प्रकृत्यर्थं हि धीयते ३
अचाद्भुषत्वात्कोष्ठस्य पीतं स्वस्थेन चौषधम्
यानि नैकान्ततः सिद्धिं तस्मात्स्वस्थं न पाययेत् ४

पुनर्वसुमतम्

इत्येतद्वचनं श्रुत्वा प्रत्युवाच पुनर्वसुः
इह दोषविशेषेण नरो भैषज्यमाचरेत् ५

दोषभेदेनोपक्रमः

वाते तु बृंहणं कुर्यात्पित्ते तु परिशोधनम्
कफे प्रच्छर्दनं साधु सन्निपाते विरेचनम् ६

शोधनानर्हाः

वातातपविशुष्काश्च ये च कर्मपरा नराः

अध्वयानविशुष्काश्च तान्न संशोधयेद्भिषक् ७

दोषप्रकोपणानि तत्र विरेचनविधिश्च

तैलमाषांस्तिलघृतं फाणितं पिष्टमोदकान्
आजं गव्यमथौरभ्रं मत्स्यान्मांसासवं दधि ८
अत्यश्नतोऽतिपिबतः सदा च स्वपतो दिवा
दोषा घोराः प्रकुप्यन्ति तेषां साधु विरेचनम् ९

कालादीनां भेषजोपकारित्वम्

किञ्चान्यद्विधिवत्काले स्निग्धस्विन्नेन भेषजम्
मात्रावल्लघु पीतं हि न कदाचिद्विपद्यते १०
नाचरेदतिमात्रं हि बहुशोऽपि पिबेन्मृदु
कषायेण तु दातव्यं कषायैः साधु सिध्यति ११

काले युक्तस्यौषधस्यामृतत्वम्

यथा ह्यन्नमकाले स्याद्विषं कालेऽमृतं भवेत्
तथौषधमकाले स्यात् विषं कालेऽमृतं भवेत् १२

शोधनार्हः कालः

तस्माद्यदा वै वसुधा तृप्ता पुष्पवती भवेत्
तदा प्रावृषि संप्राप्तवमनादीनि कारयेत् १३
मध्यचारी यदा सूर्यो धातूनुत्क्लेशयेन्नृणाम्
तदा वसन्ते संप्राप्ते वमनादीनि कारयेत् १४
तदा वर्षासु दातव्यं यदा ह्येष ऋतुः सुखः
ऋतवो युक्तशीतोष्णाः प्रशस्यन्ते हि कर्मसु १५
हैमन्तेप्यन्यथा कार्यो ग्रीष्मे भवति चान्यथा
वर्षासु चाप्यन्यथा च दुर्दिने चाप्यतोऽन्यथा १६
तस्मिंस्तस्मिंश्च काले वै भवेत्कार्योऽन्यथाऽन्यथा

सात्म्यासात्म्यं मनुष्याणामन्यथा परिवर्तते १७

स्नेहविरेचनाङ्गस्नेहपानकालः

त्र्यहं तु दापयेत् स्नेहं देये स्नेहविरेचने

स्नेहविरेचने कालव्यवस्था

नातिशीते न चात्युष्णे पेयं स्नेहविरेचनम् १८

व्युत्क्रमे व्यापदः

तृष्णाबाधा भवत्युष्णे शीते तु व्यपलीयते
अथ ग्रीष्मे तु सन्तप्तैर्धातुभिर्देहिनो भवेत् १९
अतियोगः पिपासा च तदा तस्मान्न दापयेत्
हेमन्ते चापि तद्वीर्याद्दोषा दारुणतां गताः २०
भवन्त्यकाले स्नेहस्य तदाप्यथ न दापयेत्
इह भैषज्यमुष्णं हि विक्रियामेति कालतः २१
मन्दीभवति वै तत्तु ग्रीष्मे तैक्ष्ण्यं नियच्छति

ब्रह्मचर्यनियमः

यन्मैथुनाच्छुक्लवाहा बस्तिसक्थित्रिकादि च २२
हृदयं दुर्बलं चास्य समुदीर्णश्च मारुतः
ब्रह्मचारी भवेत्तस्मात् पैत्तिकान् भजतेऽन्यथा २३

ब्रह्मचर्यव्युत्क्रमे व्यापदः

मुखपाकं मदं मूर्च्छां प्रलापं पाकविभ्रमौ
दाहं पिपासां सन्तापं वक्त्रस्याक्ष्णोश्च पीतताम् २४
धूमाभिदूषिते पित्तविकारा ये प्रकीर्तिताः

रसादिधातुगतपित्तविकाराः

भ्रमः क्लमः प्रमोहश्च मदो मूर्च्छा विकम्पनम् २५

सन्तापोऽभ्यन्तरे चैव रसस्थानगते स्मृताः
अरुषां विवृतानां वा स्फोटानां वा प्रपाचनम्  २६
रक्तस्थानगते विद्यात्पित्ते वैवर्ण्यमेव च
मांसस्थानगते स्वेदः सदनं चोपजायते  २७
मेदोधातुगते विद्यात् प्लावनं पीतमूत्रता
अस्थिमज्जगते शोषो नखदन्तविवर्णते  २८
मेढ्रमुष्कपरीतापः क्लैब्यं वाप्यथ शुक्लगे

वातप्रकोपणानि वातजा विकाराश्च

बलवद्विग्रहाद्भारात्पीडणाल्लङ्घनादपि  २९
मैथुनस्यातियोगाच्च जायते मनसः क्लमः
त्रासोद्वेगात्प्रतीघाताद्रूक्षपानान्नसेवनात्  ३०
इत्येभिरीदृशैश्चान्यैर्हेतुभिः कुपितोऽनिलः
विकाराञ्जनयेच्छ्वासकासविष्टम्भसंज्ञकान्  ३१
शूलवेपनमाध्मानं निस्तोदं सुप्ततां तथा
स्फोटनं चालनं रौक्ष्यं वेष्टनोत्क्षेपणानि च  ३२
शोषणं कार्ष्ण्यविष्यन्दौ विश्लेषस्तु परः स्मृतः

द्विविधा वातव्याधयः

द्विविधा व्याधयः प्रोक्ताः शरीरे वातसंभवाः  ३३

सर्वाङ्गरोगिणः

कोष्ठानुसारिणस्तत्र ज्ञेयाः सर्वाङ्गरोगिणः
पक्षाङ्गरोगिणश्चैव ज्ञेयाः सर्वाङ्गसारिणः  ३४
शूलवेपनसंकोचगात्रस्तम्भैश्च पीडिताः
अस्थिग्रहगृहीताश्च सर्वे सर्वाङ्गरोगिणः  ३५

एकाङ्गरोगिणः

तत्र पादतलाङ्गुष्ठजङ्घाजानूरु वंक्षणैः
गुदमेढ्रकटीपृष्ठयोनिगर्भाशयैरपि ३६
यकृत्प्लीहांसहृदयपार्श्ववक्षोभुजान्तरैः
ग्रीवागण्डहनूशङ्खनासाक्षिदशनच्छदैः ३७
ललाटकर्णसीमन्तैः प्रत्येकमनिलार्दितैः
दूयद्भिर्विकलैश्चापि ज्ञेयास्त्वेकाङ्गरोगिणः ३८
इत्येतन्मूलमुद्दिष्टं रोगाणां च यथाविधि
भूयस्त्विदमधिष्ठानं प्रतिरोगं प्रतीक्षत ३९
इत्याह भगवानात्रेयः

इति भेले पञ्चविंशोऽध्यायः

## षड्विंशोऽध्यायः

अथातः अष्टोदरीयं व्याख्यास्याम इति ह स्माह भगवानात्रेयः

### रोगगणना

अथाष्टावुदराणीह मूत्राघातांश्च निर्दिशेत्
षट् काचाँल्लिङ्गनाशांश्च जानीयात्तिमिराणि च १
हिक्काश्वासांश्च कासांश्च खालित्यं पलितानि च
शिरोरोगार्बुदान् गुल्मान् छर्दीनथ भगन्दरान् २
उन्मादान्मुखरोगांश्च स्थानान्यनशनस्य च
ग्रन्थींश्च पञ्च पञ्चैव कुष्ठान्यष्टौ विनिर्दिशेत् ३
हृद्रोगान् पाण्डुरोगांश्च सास्रावान् श्वयथूंस्तथा
अभिष्यन्दानधीमन्थान्क्लीबस्थानानि चाप्यथ ४
अक्षिरोगानपस्मारान् रक्तरोहिणिकां तथा
पिपासाश्चोपदंशांश्च चतुष्काणि विनिर्दिशेत् ५
पृष्ठरोगज्वरार्शांसि रक्तपित्तव्रणौ तथा

द्वौ द्वौ तिस्रस्तु विद्रध्यस्त्वलज्यं शोणितानि च ६
रेतसां श्लीपदं चार्म सप्त सप्त विनिर्दिशेत्
प्रमेहान् कृमिजातींश्च योनिदोषांश्च विंशतिम् ७
तत्रोदराण्यथाष्टौ तु व्याख्यातानि चिकित्सिते
निदानेनैव रोगास्तु ये नोक्तास्तान्निबोध मे ८

काचलिङ्गनाशतिमिराणि

अरुणा नीलपीताश्च हरितश्वेतलोहिताः
काचं च लिङ्गनाशं च तिमिराणि च निर्दिशेत् ९

खलितपलिते

वातः पित्तं कफो वापि यस्य शीर्षं विधावति
विदहन्नेष मूलानि स्रोतांसि समभिद्रुतः १०
अध्वना वातिभाराद्वा देहिनां वार्धकेन वा
खालित्यं पलितं वापि पञ्चधैव भवत्यथ ११

अर्बुदम्

वातजं पित्तजं चैव श्लेष्मजं मांसजं तथा
अर्बुदं मेदसा चैव पञ्चमं निर्दिशेत्पृथक् १२

मुखरोगः

वातजं पित्तजं चैव श्लेष्मजं सन्निपातजम्
आगन्तुकं पञ्चमं च मुखरोगं प्रचक्षते १३

भगन्दरः

उष्ट्रग्रीवं परिस्राविं शम्बूकावर्तमेव च
उन्मार्गं शतयोनिं च तद्वद्विद्याद्भगन्दरम् १४

छर्दि

छर्दयत्यथ वातेन पित्तेन च कफेन च
अहारादमनोज्ञाच्च सन्निपाताच्च पञ्चमम्  १५
प्रतिच्छन्ने तु हृदये वातपित्तकफैर्नरः
अरसादमनोज्ञाच्च भोज्यमन्नं न सेवते  १६

ग्रन्थिः

वातजं पित्तजं चैव श्लेष्मजं सन्निपातजम्
सिराग्रन्थिं विजानीयात्पञ्चमं स्नायुतो भिषक्  १७

अभिष्यन्दाधिमन्थौ

वातजं पित्तजं चैव कफजं सन्निपातजम्
अभिष्यन्दं विजानीयादधिमन्थं च बुद्धिमान्  १८

क्लैब्यस्थानानि

शुक्लोपरोधाद्दौर्बल्याद् ध्वजभङ्गात्तथैव च
शुक्रक्षयाच्च चत्वारि क्लैब्यस्थानानि निर्दिशेत्  १९

सर्वाक्षिरोगः

वातजं पित्तजं चैव श्लेष्मजं सन्निपातजम्
अक्षिरोगं विजानीयान्मानवानां चतुर्विधम्  २०

उपदंशः

पूयान्मूत्राच्च शुक्लाच्च सन्धानाच्चापि देहिनाम्
उपदंशं विजानीयाद्भिषगेवं चतुर्विधम्  २१

आस्रावः

रक्तास्रावं कफास्रावं पूयास्रावं तथैव च
तोयास्रावं च जानीयाद्भिषगेवं चतुर्विधम्  २२

पिपासा

वातजां पित्तजां चैव श्लेष्मजां सन्निपातजाम्
पिपासामपि जानीयाद्भिषगेवं चतुर्विधाम् २३

रोहिणिका

वातजां पित्तजां चैव श्लेष्मजां सन्निपातजाम्
विद्याद्रोहिणिकां चैव भिषगेवं चतुर्विधाम् २४

अर्म

मांसार्म त्वथ मेदोऽर्म प्रस्तार्यर्म तथैव च
स्नाय्वर्म प्रविजानीयाद् भिषगेवं चतुर्विधम् २५

ज्वरव्रणार्शांसि

द्वौ ज्वरौ दाहशीतौ तु शारीरागन्तुजव्रणौ
शुष्कार्शः शोणितार्शश्च तथा द्वे चार्शसी विदुः २६

पृष्ठरोगः

पृष्ठरोगावुपक्षारिक्षारिणौ च विनिर्दिशेत्

आक्षेपकः

बाह्यायामान्तरायामौ विद्यादाक्षेपकौ तथा २७

अलजी

मेदसः स्नायुतो मांसादलज्यस्तिस्र एव च

विद्रधिः

वातात्पित्तात्कफाच्चैव तिस्रो विद्रधयः स्मृताः २८
वराहाकारणं चैव रक्तं कांस्यवकं तथा

अर्म

वातात्पित्तात्कफान्मांसान्मेदसः स्नायुतोऽपि च २९
सिराजमर्म जानीयात्सप्तमं देहिनां भिषक्

सात्म्यानि

सप्त सात्म्यानि जानीयात्तत्र षट् स्युर्यथा रसैः ३०
सर्वसात्म्यं यदेव स्याद्वरं सात्म्यं तदुच्यते

क्रिमिजातयः

मृज्ञा जरायुजा लेवा रूपका बहुरूपकाः ३१
परिसर्पा विसर्पाश्च गात्रजा नेत्रजास्तथा
रोमादा रोहिताश्चैव कष्टा दारुणकास्तथा ३२
शिरोजा दन्तजाश्चैव श्लेष्मजाः शकृदाश्रयाः
लोहिताः कालकाश्चैव तथैव शतमातृकाः ३३
विद्याद्विंशतिरित्येताः कृमिजातीश्च देहिनाम्

आमयानां दोषानतिरेकः

यथा पतत्रिः शीघ्रोऽपि स्वां छायां नातिवर्तते
वातादेर्नातिवर्तन्ते बहवोऽपि तथामयाः ३४
इत्याह भगवानात्रेयः

इति भेले षड्विंशोऽध्यायः

सप्तविंशोऽध्यायः

अथातोऽन्नपानविधीयं व्याख्यास्याम इति ह स्माह भगवानात्रेयः

उदकादीनां गुणाः

अथोदकं क्लेदयति लवणं स्यन्दयत्यपि
अथ पाचयति क्षारः क्षीरं वै जीवयत्यपि १
स्नेहयत्यथ सर्पिश्च पिशितं बृंहयत्यपि
माषा बहुमलाश्चापि श्लीपदं जनयेद्दधि २
त्वजं प्रसादयेत्तैलं स्नेहनाय च कल्पते

पिरायाकः कुरुते ग्लानिं तक्रं च ज्ञपयत्यपि ३
मधु चाप्यथ सन्धत्ते जर्जरीकुरुते सुरा
हरेणुभिर्मसूरैश्च भृशं वायुः प्रकुप्यति ४
कफकृन्मूलकं विद्यात्सर्षपं वातकोपनम्
लशुनं वातशमनं पित्तश्लेष्मकरं च तत् ५
नातिश्लेष्मकरं हिङ्गु षाराडचं ज्ञारः करोति च

तिक्तस्यावृष्यत्वमपवादश्च

सर्वं तिक्तमवृष्यं तु विद्यादन्यत्र कूलकात् ६

पैष्टिकस्यावृष्यत्वमपवादश्च

अवृष्यं पैष्टिकं सर्वं यवगोधूमवर्जितम्

अम्लस्य पित्तलत्वमपवादश्च

दाडिमामलकादन्यत्सर्वमम्लं तु पित्तलम् ७

यवकपृथुकयोर्गुणः

यवकान् दारुणान्विद्यात्पृथुकान्शालिषष्टिकान्

आनूपमृगद्विजगुणाः

निर्दिशेन्मृगतुल्यांस्तु तथानूपान्मृगद्विजान् ८

जाङ्गलमृगद्विजगुणाः

तथैकान्तहितांश्चापि जांगलान्मृगपन्तिणः
इत्येतत्संग्रहेणोक्तं भोज्यं विस्तरतः शृणु ९

पिप्पल्यादिगुणाः

पिप्पली शृङ्गिबेरं च पलाराडुलशुनानि च
मूलकं कृष्णगन्धा च पर्णासं कालमानकम् १०
सुरसं सुमुखं चैव चटकं च फणिज्झकम्

रसेन कटुकं विद्यात् विपाके मधुरं तथा ११

किराततिक्तादिगुणाः

किराततिक्तो निम्बश्च केतुकाशकटिल्लकाः
कूलकं च सवेत्राग्रं तिक्तं मधुविपाकि च १२

प्लक्षादिगुणाः

प्लक्षकाश्मर्यमधुकं स्वादु पाके परूषकम्

खर्जूरादिगुणाः

खर्जूरं नालिकेरं च प्रियालं तद्विधानि च १३
मधूकं च बिसं चैव जीवनीयानि यानि च
रसे पाके च मधुरं तद्विद्याद् विविधं च यत् १४

बिसकटुकादिगुणाः

बिसानि कटुका बिम्बी सर्वं चैवेक्षुवैकृतम्
रसे पाके च मधुरं तद्विद्यात्त्रिविधं च यत् १५

न्यङ्क्वादिगुणाः

न्यङ्कु चरसमुद्राश्च सृमरान्खड्गसूकरान्
अन्यांश्चानूपजान् विद्यान्मधुरान् रसपाकतः १६

कादम्बादिगुणाः

कादम्बान्सैन्धवान्हंसान्सारसाञ्श्वेतवारणम्
काचाक्षान्मल्लिकाक्षांश्च तथा पुष्करसायकान् १७
दिपवेप्नि शरारींश्च विक्रमान् सुमनामुखान्
नन्दिमौद्गल्यकांश्चापि कालकान् कृष्णपुच्छकान् १८
आज्ञातान् डुण्डुभांश्चैव मण्डूकान् छुटुमल्लिकान्
हर्ष्यात्तु सप्तवारादि तथा गर्दभतासकान् १९

सर्वांश्च वारिजान्विद्यान्मधुरान् रसपाकतः

प्रियङ्गुप्लवङ्गादिगुणाः

प्रियङ्गुश्च प्लवङ्गश्च बलाकाश्च खगास्तथा २०
ये चान्येऽप्यौदका भौम्याः खेचराश्च खगाः स्मृताः
नक्रांश्च शिशुमारांश्च वल्लकीमत्स्यकच्छपान् २१
अन्यांश्च वारिजान्विद्यान्मधुरान्रसपाकतः

प्रियङ्ग्वादिगुणाः

प्रियङ्गुश्च विनक्ताश्च नीलिकाशालिषष्टिकाः २२
परूषकाश्च नीवाराः कोद्रवा ब्रह्मभूतिकाः
इत्येतद्धान्यजातं वै यच्चान्यदपि तद्विधम् २३
रसेन मधुरं तद्वै विपाके कटुकं विदुः

मुद्गादिगुणाः

मुद्गान् मसूरांश्चणकान् कुलुत्थांश्च कलायकान् २४
रसेन मधुरांस्तान्वै विपाके कटुकान्विदुः

रोह्यादिगुणाः

रोहीं श्वदंष्ट्रानुष्ट्रांश्च शरभान्मृगमातृकान् २५
अथान्यान्मधुरास्वादान्विपाके कटुकान्विदुः

खरादिगुणाः

खराश्वाश्वतरा मेषा ये चान्ये तादृशा मृगाः २६
रसेन मधुरांस्तान्वै विपाके कटुकान्विदुः

हारीतादिगुणाः

हारीतान् स्तोककांश्चैव कपोतान् शुकशारिकाः २७
चटकान् भृङ्गराजांश्च तथापिप्पलकानपि

गोधापुत्रांस्तैलपाकान्ये चान्ये प्रतुदाः खगाः २८
ये चान्ये मधुरास्तान्वै विपाके कटुकान्विदुः

अनुपानानि

अनुपानानि वक्ष्यामि येषु यानि हितानि वै २९
आजे कषायशीतस्तु हायने चोदकं तथा
अनुपानं विधातव्यं वाराहे खदिरोदकम् ३०
दधि चुक्रं च धान्यानामनुपानं प्रदापयेत्
शीतोदकं बिसग्रन्थिसेवनानां तथासवान् ३१
तद्वारिजानां सत्वानामनुपानं प्रदापयेत्
त्रिफलां शीधुमार्द्वीकं कदम्बपनसोदकम् ३२
सुरद्रुजम्बूप्लक्षाणां फलस्कन्धासवान्पृथक्
मुद्गादिसूपधान्यानामनुपानं प्रदापयेत् ३३
बिल्वपिण्डककल्कानां कपित्थस्याथवासवान्
गुहाशयानां सत्वानामनुपानं प्रदापयेत् ३४
न्यग्रोधादिगणस्याथ स्कन्धशाखाफलासवान्
विष्किराणां विहङ्गानामनुपानं प्रदापयेत् ३५
ककुभस्यानुपानं तु स्निग्धानां चापि वारुणीम्
चतुर्विधस्य स्नेहस्य तोयमुष्णं प्रदापयेत् ३६
द्राक्षाकाश्मर्यखर्जूरयववाट्यांस्तथासवान्
प्रतुदानां विहङ्गानामनुपानं प्रदापयेत् ३७
अश्वगन्धकषायं तु वारुणीमण्डमेव च

अनुपानगुणाः

सुखेन पाचयत्यन्नं रोचयत्यपकर्षति
अनुपानं मनुष्याणां सात्म्यतां च प्रयच्छति ३८

इत्याह भगवानात्रेयः

इति भेले सप्तविंशोऽध्यायः

## अष्टाविंशोऽध्यायः

अथातो भोजनविधीयं व्याख्यास्याम इति ह स्माह भगवानात्रेयः

भोज्य सर्वं षड्रसम्

यद् भक्षयति भुङ्क्ते वा विधिवच्चापि मानवः
अन्यच्च किञ्चित्पिबति तत्सर्वं षड्रसान्वितम्  १

भोज्यानां रसादिवर्णनप्रतिज्ञा

पथ्यापथ्यमबोधार्थं तस्माद्भोज्यं शरीरिणाम्
रसतो वीर्यतश्चैव प्रवक्ष्याम्यत उत्तरम्  २

शालिगुणाः

शालयो मधुराः सर्वे विपाके कटुकाः स्मृताः

रक्तशालिगुणाः

रक्तशालिर्वरस्तेषामरौक्ष्याल्लेखनो न च  ३

दीर्घशूकादिगुणाः

दीर्घशूको महाशालिः सुगन्धिःशालिकामुखः
कृष्णव्रीहिः काञ्चनकः लोपाक्षः शीतभीरुकः  ४
हायनो लोध्रशालिश्च रक्तशालिगुणान्वितः
पूर्वपूर्वो लघुतरः पथ्यः किंच भवत्यतः  ५
सुगन्धका गन्धवन्तो गन्धेन मदयन्त्यथ

कलमगुणाः

रौक्ष्याच्च कलमं विद्यादधिकं वै विशेषतः  ६

षष्टिकगुणाः

कषायास्त्वधिकाः किंचित् षष्टिकाः शालिभिः समाः

पाटलगुणाः

महादोषाः सुगुरवः पाटलाव्रीहयस्तथा ७

यवकादिगुणाः

यवका नित्यमहिताः कृष्णव्रीहिप्रमोदकाः
वीर्योष्णा मधुरास्ते वै सकषायाश्च कीर्तिताः ८

कोरदूषादिगुणाः

बहुरूक्षाः कषायाश्च कोरदूषाः सवारुणाः

प्रसाधिकादिगुणाः

प्रसाधिकाः कंगवश्च श्यामाकाश्च समा रसैः ९
उदालकास्तु संख्याताः कषाया मधुरा रसे
ग्रीष्मे तु सेवितास्ते वै कोपयन्त्याशु मारुतान् १०

यवादिगुणाः

यवास्त्वतियवाश्चैव गोधूमाश्च समा रसे
मधुराः सकषायाश्च श्लेष्मला लोहिता नृणाम् ११

वेणुयवगुणाः

अथ वेणुयवा नातिकषाया मधुरा रसे
कफं पित्तं च मेदश्च कोपयन्त्यतिसेविताः १२

कृष्णमुद्गादिगुणाः

कृष्णा मुद्गा महामुद्गाः हरिताश्चिरजीविनः
मकुष्ठकाश्च तेऽप्युक्ताः कषाया मधुरा रसे १३

हरेणवादिगुणाः

हरेणवो मसूराश्च सतीनाश्च तथाढकी
कुलुत्थाश्च विशेषेण कषायमधुरा रसे १४

सर्वलवणक्षारगुणाः

सर्वे तु लवणक्षारा दीपनीयाः प्रकीर्तिताः
अवृष्याश्च विशेषेण दुर्बलानां हिता न च १५

श्वदंष्ट्रायावनालक्षारगुणाः

श्वदंष्ट्रा यावनालश्च द्वौ क्षारौ शीतलौ स्मृतौ
शुक्लं विनिहतस्तौ तु दृष्टिं चापि शरीरिणाम् १६

नवनीतघृतगुणः

नवनीतं तथाम्लं तु घृतं वै मधुरं स्मृतम्

क्षीरगुणाः

सर्वं दुग्धमभिष्यन्दि गव्यं तेभ्यो विशिष्यते १७
वाजी भवति दुग्धेन बलं चात्युपजायते
सञ्जीवनं सम्भवति सर्वं क्षीरमुदाहृतम् १८

तैलसामान्यगुणः

रसे पाके च मधुरं तैलं सर्वं प्रकीर्तितम्
यस्मिन्यस्मिन्विशेषस्तु यो यस्तस्मिन्निबोध तम् १९

एरण्डबिल्वतैलगुणाः

तैलमेरण्डबिल्वानामुष्णं वातहरं स्मृतम्
इत्युक्तान्युष्णवीर्याणि यदन्यच्छीतमेव तत् २०

विभीतकतैलगुणाः

विभीतकानां तैलं तु कषायमधुरं रसे
कफपित्तहरं प्रोक्तं केश्यं चैव शरीरिणाम् २१

करञ्जतैलगुणाः

अतः करञ्जबीजानां विज्ञेयानि तथैव च
तैलानि रसतो विद्यात्तिक्तानि मधुराणि च २२

इङ्गुदीतैलगुणः

पित्तश्लेष्मकरं तिक्तमिङ्गुदीतैलमुच्यते

मधूकतैलगुणः

सकषायं मधूकानां कफपित्तानिलापहम् २३

कोलतैलगुणाः

कौलकं मधुरस्पर्शं रसतोऽथ विपाकतः

पलालजातच्छत्राकगुणाः

यस्मिन्यस्मिन्विशेषस्तु यो यस्तं मे निबोधत २४
पलालजातं छत्राकमतीव गुरुसम्मतम्
महादोषमभिष्यन्दि सुखं बाहोपघातकम् २५

गोमयच्छत्राकगुणाः

छत्राकं गोमयोद्भूतं कषायमधुरं रसे

वेणुच्छत्राकगुणाः

कषायं वेणुच्छत्राकं मारुतं कोपयेन्नृणाम् २६

शाकसामान्यगुणाः

सर्वं तु शाकं मधुरं रसतोऽथ विपाकतः
यस्मिन्यस्मिन्विशेषस्तु यो यस्तस्मिन्निबोध तम् २७

अलाबुगुणाः

मारुतं कोपयेन्नृणां विष्टम्भित्वादलाबुकम्
श्लेष्माणं वर्धयेच्चापि विपाकेन बलीयसा २८

कूष्माराडगुणाः

कूष्माराडं श्लेष्मलं विद्यान्नवं शरदि भक्षितम्
तदल्पदोषं भवति परिसंवत्सरोषितम्  २६

खदिरशाकगुणाः

कषायमधुरं विद्यात्खादिरं चातिसारि च
तिक्तं दीपनसंसृष्टं निर्दोषं तच्छरीरिणाम्  ३०

कोशातक्यादिगुणः

कोशातकी करीराणां शतावर्याश्च तिक्तकम्

नालिकापुष्करवर्तकयोर्गुणः

कषायं नालिकायाश्च तिक्तः पुष्करवर्तकः  ३१

वेत्राग्रादिगुणाः

वेत्राग्रं तिक्तकं निम्बं तिलशाकं च शीतका
कुरूटिका कुनटिका तथा गन्धर्वहस्तकः  ३२
तथा नाडीकलायश्च पञ्चाङ्गुल्यस्तथैव च
एतानि विद्याच्छाकानि तिक्तानि रसपाकतः  ३३

सतीनकोविदारशाकगुणाः

सतीनशाकं मधुरमीषत्तिक्तोपसंहितम्
कोविदारस्य शाकं तु पूर्वेणैव समं मतम्  ३४

वार्ताकगुणाः

वार्ताकीनां फलं तिक्तं कटुकेनोपसंहितम्
ग्रहणीं दीपयत्येतच्छ्लेष्माणं विनिहन्ति च  ३५

कठिल्लबकुलगुणाः

कठिल्लबकुलौ चैव मधुरौ शुक्रशोधनौ

हतस्तन्द्रां च वातं च नित्यमेव विषूचिकाम्  ३६

अलम्बुसगुणाः

अलम्बुसः सकटुकस्तिक्तको वातकोपनः
भिनत्ति कफसङ्घातं विष्टभ्याथ विपच्यते  ३७

लाङ्गशाकगुणाः

लाङ्गशाकं तु मधुरं लवणेनोपसंहितम्
कटुकं बहुदोषं च तथा पद्मनिकाचनम्  ३८

स्वस्तिकादिगुणाः

कटुको दीपनीयश्च विषहा स्वस्तिको रसे
कषायमधुरा चिल्ली चुञ्चुर्मधुरशीतलः  ३९

भार्ङ्गीमाषगुणाः

भार्ङ्गी माषश्च मधुरौ रसतः परिकीर्तितौ

मुद्गशाकवास्तुकगुणाः

मुद्गशाकं सतिक्तं तु सक्षारश्चैव वास्तुकः  ४०

निष्पावशाकमाषशाकगुणाः

निष्पावशाकं मधुरं माषशाकं तथा स्मृतम्

चन्द्राकगवेधुकगुणाः

चन्द्राकशाकमम्लं तु कषायस्तु गवेधुकः  ४१

तुन्नकादिगुणाः

तुन्नकंप्रपुनाटश्च जीवन्ती सुनिषण्णकम्
मधुराण्यल्पदोषाणि तथैव तु कुटिञ्जकः  ४२
पिण्डालुशाकं च नवं तुण्डिकेरफलानि च
मधुराण्यल्पदोषाणि संसृष्टकटुकानि च  ४३

उपोदका तु मधुरा लवणेनोपसंहिता
इत्येतन्निर्दिशेच्छाकं यदन्यदपि तद्विधम् ४४

अजादिमांसगुणाः

आजं गव्यमथौरभ्रं वाराहं चैव यत्स्मृतम्
हस्तिमांसं च मधुरमुष्ट्रं गुरु च निर्दिशेत् ४५
विद्यादेवंगुणं चैव सकषायं च माहिषम्
खड्गमांसमभिष्यन्दि सस्वादुलवणं रसे ४६
कृतमायुर्मयूरश्च गोकर्णो गवयो गुरुः
सृमरश्चमरो न्यङ्कुर्मधुरा गुरवश्च ते ४७
ऋश्यश्च मृगमाता च तुङ्गश्च हरिणी मृगः
पारावत - - - ४८

इति भेले अष्टाविंशोऽध्यायः

इति भेलसंहितायां सूत्रस्थानं समाप्तम्

निदानस्थानम्

द्वितीयोऽध्यायः

साहसजक्षयः

उरोविघातात्तस्याथ ज्वरः कासश्च जायते
स्वरः सीदति चाप्यस्य निष्ठीवति सशोणितम्  १
अथवाप्यवशो जन्तुः शश्वत्स परिहीयते
इत्येतैर्लक्षणैर्विद्यात्साहसप्रभवं क्षयम्  २
यावत्स बलवानेव बृंहयेत्तावदेव तम्
यस्माद्बलसमावेशं पुरुषस्येह जीवितम्  ३

सन्धारणजक्षयः

स यदा गुरुमध्ये वाप्यथवा राजसंसदि
गोष्ठे स्त्रीद्यूतमध्ये वा हस्तिपृष्ठेऽथवा रथे  ४
भयात्प्रसङ्गाच्च ह्रिया घृणित्वाद्वापि मानवः
प्राप्तपातं पुरीषं वा मूत्रं वापि रुणद्धि यः  ५
तस्य सन्धारणाद्वायूरूर्ध्वभागे समीरितः
उरःशूलं पार्श्वशूलं गुल्मं च जनयत्यथ  ६
गुल्मजन्मनिमित्तश्च ज्वरः कासश्च जायते
स्वरः प्रभिद्यते चास्य निष्ठीवति सपूतिकम्  ७
अथवाप्यवशो जन्तुः शश्वत्स परिहीयते
इत्येभिर्लक्षणैर्विद्यात्सन्धारणकृतं क्षयम्  ८
आत्मार्थं लज्जते जन्तुर्गुरोर्वा स्त्रीजनस्य च
तस्मादात्मार्थमेवेह प्राप्तं वेगं न धारयेत्  ९

धातुक्षयजक्षयः

स यदा दुर्बलो जन्तुः स्वल्पाहारः कृशोऽपि वा

रूक्षभोजी विशेषेण स्त्रियो यश्चातिसेवते १०
सरक्तं कुरुते मूत्रं जन्तुः शुक्लपरिक्षयात्
रेतःस्थानं च सुषिरं वायुरस्य प्रधावति ११
तस्य वाताभिभूतस्य ज्वरः कासश्च जायते
स्वरः सीदति चाप्यस्य निष्ठीवति सशोणितम् १२
अथवाप्यवशो जन्तुः शश्वत्स परिहीयते
इत्येभिर्लक्षणैर्विद्यादतिमैथुनजं क्षयम् १३
रतिमूलं शरीरं हि शरीरस्य रतिः फलम्
तस्मात्फलार्थी मूलार्थं स्त्रियः सेवेत युक्तितः १४

विषमाशनजक्षयः

स यदा दुर्बलो जन्तुः सेवते विषमाशनम्
भुञ्जानस्यास्य विषमं वैषम्यं यान्ति धातवः १५
ततः पुरीषमेवेह वर्धयत्यस्य भोजनम्
नावाप्नोति रसं देहे विकृतस्येव देहिनः १६
रसे निवृत्ते तस्याथ ज्वरः कासश्च जायते
स्वरः सीदति चाप्यस्य निष्ठीवति सशोणितम् १७
अथवाप्यवशो जन्तुः शश्वत्स परिहीयते
इत्येभिर्लक्षणैर्विद्याद्विषमाशनजं क्षयम् १८
यस्मादर्थी शरीरार्थं रसभोजनमिच्छति
शरीरापेक्षया तस्मादाहारं सुसमाचरेत् १९
इति चत्वारि शोषाणामुक्तान्यायतनानि मे
यानि बुद्ध्वा परिहरेदारोग्यार्थी पुमानिह
बुद्धौ चारोग्यमायत्तमिदयुक्तं महर्षिणा २०
इत्याह भगवानात्रेयः

इति भेले निदाने द्वितीयोऽध्यायः

## तृतीयोऽध्यायः

अथातो गुल्मनिदानं व्याख्यास्याम इति ह स्माह भगवानात्रेयः
वातात्पित्तात्कफाच्चैव निचयादथ लोहितात्
पञ्च गुल्मा भवन्तीह तेषां वक्ष्यामि लक्षणम् १

### वातगुल्मः

स यदा वातलो जन्तुर्वातलं भजतेऽशनम्
धावति प्लवते वापि रात्रौ जागर्ति वा पुनः २
अतिब्रूतेऽतिहसति स्त्रियो वातनिषेवते
उदावर्तयते वापि कर्म चातिनिषेवते ३
वृक्षप्रपतनाद्वापि छर्दयत्यथवा बलात्
तस्यैवं कुपितो वायुरामाशयमुपागतः ४
पार्श्वयोर्हृदि कुक्षौ वा गुल्मं संजनयत्यथ
स सकृद्भवति स्थूलः पुनर्भवति वाप्यणुः ५
तोदस्फुरणसंयुक्तो विध्यते च विधावति
वेदनां जनयत्येष ज्वरं सञ्जनयत्यपि ६
बस्तिशीर्षं च संगृह्य दारयन्निव तिष्ठति
विषं भवति चाहारो मूर्धानं प्रतिपद्यते ७
पुनश्च दृश्यते व्यक्तं पुनर्नश्यति चाप्यथ
करोति गाढं दुःखेन पुरीषं वा सशोणितम् ८
कृष्णाभासश्च पुरुषो वातगुल्मी स दृश्यते

### पित्तगुल्मः

यस्सदा पित्तलो जन्तुः पित्तलं भजतेऽशनम् ९
अप्रमाणेन दुर्मेधाः सेवते पानमीदृशम्
तस्यैवं कुपितं पित्तमामाशयमुपागतम् १०

पार्श्वयोर्हृदि कुक्षौ वा गुल्मं सञ्जनयत्यथ
उष्यते दूयते चापि दह्यते धूप्यते तथा ११
नित्यं तप्तश्च रक्तं च स्वेदं मुञ्चत्यभीक्ष्णशः
अयोगोलो यथा तप्तस्तथा स्थानगतो दहेत् १२
तृष्णां मूर्च्छां च जनयेत्स्थानादपि विसर्पति
वेदना परमा चैव तस्मिन् स्थाने प्रजायते १३
पुरा जातानि लोमानि तस्माद्गुल्मपरिग्रहात्
च्यवन्ते न च जायन्ते यावद्व्याधिर्न शाम्यति १४
पित्तगुल्मेन पुरुषः पीताभासश्च लक्ष्यते

श्लेष्मगुल्मः

यस्सदा श्लेष्मलो जन्तुः श्लेष्मलं भजतेऽशनम् १५
अप्रमाणेन दुर्मेधा दिवास्वप्नरतस्तथा
तस्यैव कुपितः श्लेष्मा ह्यामाशयमुपागतः १६
पार्श्वयोर्हृदि कुक्षौ वा गुल्म सञ्जनयत्यथ
न चास्य स्वदते भोज्यं भुक्तं न च विपच्यते १७
श्लेष्मणा सह भुक्तं च मुहुरूर्ध्वं प्रपद्यते
शुक्लमूत्रपुरीषश्च शुक्लाभासस्तथैव च १८
शुक्लनेत्रश्च भवति गुल्मे श्लेष्मसमुद्भवे

सन्निपातगुल्मः

यस्सदा कर्शितो जन्तुर्व्याधिना भेषजेन वा १९
असञ्जातबलाग्निश्च दोषलान्युपसेवते
तस्य सन्निचिता दोषा गुल्मं कुर्वन्ति दारुणम् २०
तत्र सर्वाणि रूपाणि दृश्यन्ते सान्निपातिके

रक्तगुल्मः

अथ लोहितगुल्मस्तु स्त्रीणामेव प्रजायते २१
नासौ भवति नृणां तु तस्य वक्ष्यामि लक्षणम्
अचिरप्रच्युते गर्भे सूतिकायास्तथाचिरात् २२
अतिप्रजननाद्वापि तथाप्रजननेन वा
सन्धारणाद्वा भारस्य रक्तमाध्मापयेत्ततः २३
सा शोणिते स्थिते नारी गर्भिणी स्त्रीति मन्यते
समयादथ शूलानि तस्याः कुक्षौ भवन्त्यथ २४
कोष्ठे गुल्मोदरं तच्च गर्भोऽयमिति मन्यते
गर्भोऽयमिति च व्याधिर्वर्षमेकं बहून्यपि २५
धारयत्यथ निर्भेदं कथञ्चित्सन्नियच्छति
अथास्याः कालपर्यायात्सक्षीरौ भवतः स्तनौ २६
कृशा भवति सा पाण्डुर्दोहदं चाभिनन्दति
छर्दिर्निष्ठीविका चैव तन्द्रा चैवं प्रबाधते २७
पादयोः श्वयथुश्च स्याद्रक्तगुल्मे प्रदुष्यति

साध्यासाध्यता

एषां तु खलु पञ्चानां गुल्मानां समुदाहृतम्
विद्यादसाध्यं निचयं यत्नसाध्यांस्तथेतरान् २८
इत्याह भगवानात्रेयः

इति भेले निदाने तृतीयोऽध्यायः

## चतुर्थोऽध्यायः

अथातः कासनिदानं व्याख्यास्याम इति ह स्माह भगवानात्रेयः

कासभेदाः

वातात्पित्तात्कफाच्चैव क्षताद्वाथ क्षयादपि

पञ्च कासा भवन्तीह तेषां वद्त्यामि लद्तणम्  १

वातकासः

यस्सदा वातलो जन्तुरसात्म्यं वै निषेवते
रूद्तमश्नाति पिबति रूद्तं हि बहु खादति  २
तस्य वातः प्रकुपितो गृहीत्वा हृदयं ततः
ऊर्ध्वं सम्प्राप्य धमनीरथ कासाय कल्पते  ३
उरःशूलं पार्श्वशूलं पृष्ठस्तम्भश्च जायते
आटोप्यतेऽस्योदरं च शिरश्चास्यातिमन्थ्यते  ४
उरोऽभिघातात्पार्श्वे च गृह्येते इव देहिनः
कफः प्रकासमानस्य ससंरम्भः प्रवर्तते  ५
प्रततं कासमानस्य मूत्रं वातो रुणद्धि हि
इत्येभिर्लद्तणैर्विद्याद्वातकासं शरीरिणाम्  ६

पित्तकासः

यस्सदा पित्तलो जन्तुरसात्म्यं वै निषेवते
अम्लमश्नाति पिबति खादत्यास्वादयत्यपि  ७
तस्य पित्तं प्रकुपितं गृहीत्वा हृदयं ततः
ऊर्ध्वं सम्प्राप्य धमनीस्ततः कासाय कल्पते  ८
उरो विदह्यते चास्य तथैवाप्यभितप्यते
सोष्मनासश्च भवति दह्येते चाद्तिणी ततः  ९
निष्ठीवति सपित्तं च रक्तं वा ना कदाचन
मुखं भवति वा पीतं पित्तकासेन देहिनः  १०

कफकासः

यस्सदा श्लेष्मलो जन्तुः श्लेष्मलं भजतेऽशनम्
पिबत्यश्नाति मधुरं मधुरं वापि खादति  ११

अव्यायामरतश्चापि दिवास्वप्नं च सेवते
तस्य श्लेष्मा प्रकुपितो गृहीत्वा हृदयं ततः १२
ऊर्ध्वं सम्प्राप्य धमनीस्ततः कासाय कल्पते
ग्रथितं श्लेष्मणा कासं निष्ठीवति सपूतिकम् १३
दुष्टश्लेष्मप्रतिश्यायः श्लेष्मकासेन जायते

क्षतकासः

साहसं कर्म यः कृत्वा विक्षतं खेदयत्युरः १४
निष्ठीवति सरक्तं च कासे क्षतसमुद्भवे

क्षयकासः

स्त्रीषु सक्तश्च यो जन्तुस्तस्य शुक्लपरिक्षयात् १५
लिङ्गं वाताभिभूतत्वात्सूचीभिरिव तुद्यते
सरक्तं कुरुते मूत्रं तथा शुक्लं च लोहितम्
सरक्तं कासते चापि क्षयकासः स सम्मतः १६

कासलक्षणोपसंहारः

सर्व एते समुद्दिष्टाः कासा लक्षणतो मया
तानवेक्ष्य भिषग् बुद्ध्या ततः कुर्याच्चिकित्सितम् १७
इत्याह भगवानात्रेयः

इति भेले निदाने चतुर्थोऽध्यायः

पञ्चमोऽध्यायः

अथातः कुष्ठनिदानं व्याख्यास्याम इति ह स्माह भगवानात्रेयः

कुष्ठसामान्यहेतुः

पिप्पलीं काकमाचीं च लिकुचं दधिसर्पिषा
वातायुं पयसा सार्धं गुडेन सह मूलकम् १

अन्यदेवंविधं यच्च विरुद्धं तत्समश्नतः
छर्दिं प्रतिघ्नतश्चापि मिथ्यासंसर्गसेवनात् २
अनुल्लिख्य विदग्धं च विदाहि च समश्नतः
पथि चाराद्विरिक्तस्य श्रान्तस्योदकसेवनात् ३
मत्स्यान् पयश्च निम्बूंश्च तथैकध्यं समश्नतः
जन्तोस्सञ्जायते कुष्ठं तद्विधानां च सेवनात् ४

श्लेष्मकुष्ठानि

यस्सदा श्लेष्मलो जन्तुः श्लेष्मलं भजतेऽशनम्
सेवते च दिवास्वप्नं तस्य श्लेष्मा प्रवर्धते ५
स वृद्धो दूषयत्यस्य मांसं त्वग्रुधिरं तथा
उत्साद्यते त्वग्दोषेण स्विद्यते तेन चाप्यथ ६
तत्र कुष्ठानि जायन्ते दद्रु सिध्मानि वै पुनः
मण्डलानि च चित्राणि तेषां वक्ष्यामि लक्षणम् ७
मण्डलानि घनानीह पिटकाभानि सर्वशः
सकण्डूनि विसर्पीणि दद्रुकुष्ठानि निर्दिशेत् ८
प्रस्रवन्ति यदा तानि दोषोत्सन्नानि देहिनः
तदास्य कीलं दोषं च पिच्छिलं संस्रवन्ति च ९
संहतानि विपाण्डूनि पङ्क्तिलोष्ठचितानि च
त्वगुत्थानि तु रूक्षाणि मण्डलानि तनून्यपि १०
सिध्मकुष्ठानि जानीयात्तथा तानि भवन्ति वै
पिच्छिलं मधुवर्णं च यदा दोषाः स्रवन्ति च ११
मण्डलानि च शुक्लानि घनोत्सन्नानि सर्वशः
विद्यान्मण्डलकुष्ठानि चिरभेदीनि देहिनाम् १२
यदा तु तानि भिद्यन्ते तदा श्वेतं स्रवन्ति हि

इति श्लेष्मसमुत्थानि त्रीणि कुष्ठानि निर्दिशेत्  १३

वातकुष्ठम्

यस्सदा वातलो जन्तुर्वातलं भजतेऽशनम्
वातातपौ सेवते च तस्य वातः प्रवर्धते  १४
स वृद्धो दूषयत्यस्य त्वङ्मांसरुधिरं तथा
उत्साद्यते त्वग्दोषेण स्विद्यते तेन चाप्यथ  १५
कपालकुष्ठं तेनास्य प्रदुष्टे मांसशोणिते
जन्तोर्विवृद्धवातस्य तस्य वक्ष्यामि लक्षणम्  १६
परुषारुण्यरुणाभानि मण्डलानि समानि च
विद्यात्कपालकुष्ठानि चिरभेदीनि देहिनाम्  १७

पित्तकुष्ठानि

यस्सदा पित्तलो जन्तुः पित्तलं भजतेऽशनम्
वातातपौ सेवते च तस्य पित्तं प्रकुप्यति  १८
तद् वृद्धं दूषयत्यस्य त्वङ्मांसरुधिरं तदा
उत्साद्यते त्वग्दोषेण स्विद्यते तेन चाप्यथ  १९
ततः कुष्ठानि जायन्ते प्रदुष्टे मांसशोणिते
पित्तस्य परिकोपे वा तेषां वक्ष्यामि लक्षणम्  २०
पक्वोदुम्बरवर्णानि मण्डलानीह यानि तु
विद्यादौदुम्बराण्यत्र तान्यसाध्यानि देहिनाम्  २१
प्राप्नुवन्ति यदा भेदं कुष्ठान्यौदुम्बराणि च
मण्डलीकानि कुष्ठानि तदा तानि भवन्ति वै  २२
मण्डलानि च यानीह पुण्डरीकनिभानि वै
पुण्डरीकाणि साध्यानि तानि विद्याद्विचक्षणः  २३
प्राप्नुवन्ति यदा भेदं पुण्डरीकाणि यानि वै

ऋृश्यजिह्वानि कुष्ठानि तदा तानि विनिर्दिशेत् २४
नीलोत्पलसवर्णानि मण्डलानीह रूपतः
ऋृश्यजिह्वानि कुष्ठानि तान्यसाध्यानि निर्दिशेत् २५
प्राप्नुवन्ति यदा भेदमृश्यजिह्वान्यशेषतः
काकणानीति मतिमांस्तदा तानि विनिर्दिशेत् २६
काकणन्तिकवर्णानि मण्डलानीह यानि तु
काकणानीति तान्याहुः प्रत्याख्येयानि देहिनाम् २७
इति कुष्ठनिदानं वै व्याख्यातमनुपूर्वशः
तन्निशम्येह मतिमान् हितजीर्णाशनो भवेत् २८
इत्याह भगवानात्रेयः

इति भेले निदाने पञ्चमोऽध्यायः

षष्ठोऽध्यायः

अथातः प्रमेहनिदानं व्याख्यास्याम इति ह स्माह भगवानात्रेयः

द्विविधः प्रमेहः

प्रकृतिप्रभवश्चैव नरस्य स्वकृतस्तथा
ज्ञेयः प्रमेहो द्विविधस्तस्य वक्ष्यामि लक्षणम् १

सहजमेहः

श्लक्ष्णाङ्गा मृदवः स्निग्धा भृशं श्लेष्मलमेदुराः
जातप्रमेहा नर्दन्ति मत्स्यमांसोचिता नराः २
मातापितृभ्यामीदृग्भ्यां जनितो यस्तु मानवः
मेदःशिथिलनात्तस्य प्रकृत्या स तु मेहति ३

जन्मोत्तरजमेहनिदानम्

अनूपजानां सुस्निग्धैर्विविधैश्चापि वारिजैः

गव्याजौरभ्रमांसैश्च सद्यौ दध्ना घृतेन वा ४
गुडप्रकारैः पयसा पललेनौदकैः खगैः
अव्यायामाद्दिवास्वप्नात्सुखशय्यासनात्तथा ५
इत्येभिरीदृशैश्चान्यैर्मेदः स्निग्धैः प्रवर्धते
मेदः प्रवृद्धं देहं च बस्तिं च क्लेदयत्यपि ६

श्लेष्मप्रमेहाः

यस्सदा मेदसा क्लिन्नः श्लेष्मलं भजतेऽशनम्
तस्य प्रकुपितः श्लेष्मा प्रमेहान् कुरुते दश ७
तद्यथोदकमेहं च पिष्टमेह तथैव च
एवमादींस्तथान्यांश्च तेषां वक्ष्यामि लक्षणम् ८
स्फटिकाम्बुनिभं मूत्रमुदमेही प्रमेहति
शुक्लपिष्टनिभं चापि पिष्टमेही प्रमेहति ९
काण्डेक्षुरसमेही च मेहतीक्षुरसोपमम्
मूत्रं शुक्लोपमं चापि शुक्लमेही तु मेहति १०
इत्येतांश्चतुरो मेहाञ्जानीयात्केवलात्कफात्
श्लेष्मण्यनुबले पित्ते ये मेहन्ति तु ताञ्छृणु ११
लवणाम्बुनिभं मूत्रं विद्याल्लवणमेहिनः
प्रमेहति तथा जन्तुस्सुरामेही सुराकृति १२
मूत्रं सान्द्रं प्रसन्नं तु दृश्यते सान्द्रमेहिनः

इति भेले निदाने षष्ठोऽध्यायः

सप्तमोऽध्यायः

पित्तोन्मादः

गीतानि भजते नित्यं पित्तोन्मादनिपीडितः

श्लेष्मोन्मादः

यस्सदा श्लेष्मलो जन्तुः श्लेष्मलं भजतेऽशनम्
सेवते च दिवास्वप्नं तस्य श्लेष्मा प्रवर्धते १
स वृद्ध ऊर्ध्वं हृदयाद् गृहीत्वा धमनीर्दश
रुद्ध्वा चेतोवहं मार्गं संज्ञां भ्रंशयते ततः २
स भ्रष्टसंज्ञः पुरुषस्तानि तानि विचेष्टते
गायन्नृत्यति चैकत्र हसत्यथ च रोदिति ३
एकत्रास्ते विना लोकं शेते चापि जडो यथा
जनं भीषयते चापि श्लेष्मोन्मादी पुमानिह ४

सन्निपातोन्मादः

यस्त्वेतत् सर्वमश्नाति यथोक्तं दोषकोपनम्
सन्निपातात्तथोन्मादं सर्वलिङ्गं स ऋच्छति ५

आगन्तून्मादः

स यदा धननाशेन मरणेन प्रियस्य वा
अथ चिन्तयते तस्य संज्ञा भ्रश्यति चिन्तया ६
स चिन्तयति यान् भावांस्तानेव प्रलपत्यथ
आगन्तुं पञ्चमं विद्यादित्युन्मादं शरीरिणाम् ७
सर्वानेतान् विजानीयादुन्मादान्वै चिकित्सितात्
दुःखेन संज्ञाभ्रष्टो हि प्रकृतिं पुनर्ऋच्छति ८

दोषाणां शरीरमात्रपीडाकरत्वम्

एवं शरीरजा दोषाः शरीरे पर्यवस्थिताः
शरीरमेव हिंसन्ति पावकः स्वमिवाश्रयम् ९

पिशाचादीनामुन्मादाहेतुत्वम्

न हि सत्वानि हिंसन्ति न पिशाचा न राक्षसाः

देवास्तथा धर्मशीलाः मध्यस्था मनुजान्प्रति  १०

उन्मादासंभवोपायः

वमने रेचने युक्तो निरूहे चानुवासने
न जातु दारुणान् रोगानुन्मादान् प्राप्नुयान्नरः  ११
इत्याह भगवानात्रेयः

इति भेले निदाने सप्तमोऽध्यायः

अष्टमोऽध्यायः

अथातोऽपस्मारनिदानं व्याख्यास्याम इति ह स्माह भगवानात्रेयः

चत्वारोऽपस्माराः

वातात्पित्तात्कफाच्चैव सन्निपातात्तथैव च
अपस्मारा भवन्तीह तेषां वक्ष्यामि लक्षणम्  १

वातापस्मारः

यस्सदा वातलो जन्तुर्वातलं भजतेऽशनम्
व्यायामं सेवते चापि तस्य वातः प्रकुप्यति  २
स वृद्ध ऊर्द्ध्वं हृदयाद्गृहीत्वा धमनीर्दश
रुद्ध्वा चेतोवहं मार्गं संज्ञां भ्रंशयते ततः  ३
स भष्टसंज्ञः पतति दन्तान्कटकटायते
उत्फालयति नेत्रे च भ्रुवौ प्रक्षिपते तथा  ४
स चेत्प्रत्यागतो ब्रूयात्तमसः परतो गतः
प्रतिभाति च मे कृष्णा जगती खण्डशस्तथा  ५
तदोर्ध्वमेवं हृदयं वायुर्वर्चोपधावति
इत्येतैर्लक्षणैर्विद्यादपस्मारं तु वातजम्  ६

पित्तापस्मारः

यस्सदा पित्तलो जन्तुः पित्तलं भजतेऽशनम्
अग्न्यातपौ सेवते च तस्य पित्तं प्रवर्धते ७
तद्वृद्धमूर्ध्वं हृदयाद्गृहीत्वा धमनीर्दश
रुद्ध्वा चेतोवहं मार्गं संज्ञां भ्रंशयते ततः ८
स भ्रष्टसंज्ञः पतति दन्तान्कटकटायते
उत्फालयति नेत्रे च भ्रुवावुत्क्षिपते तथा ९

कफापस्मारः

स चेत्प्रत्यागतो ब्रूयात्तमसः परतो गतः
प्रतिभाति च मे शुक्ला जगती खण्डशस्तथा १०
तदोर्ध्वमेवं हृदयं कफो वर्चोपधावति
इत्येतैर्लक्षणैर्विद्यादपस्मारं कफात्मकम् ११

सन्निपातापस्मारः

यस्त्वेतत्सर्वमश्नाति यथोक्तं दोषकोपनम्
सन्निपातादपस्मारं सर्वलिङ्गं स ऋच्छति १२

अपथ्यनिमित्त एवापस्मारः

एवं रसैरिहापथ्यैर्विवृद्धेष्वनिलादिषु
नापस्मारयते प्राणी न सत्वैरुपहन्यते १३

अपस्मारवेगस्य नैमित्तिकत्वे युक्तिः

यदा यदाभिवर्धन्ते दोषाः पर्वस्विवोदधिः
तदा तदापस्मरति नैष क्लिश्यति सन्ततम् १४

स्थानार्थसंग्रहः

ज्वरस्य शोषगुल्मानां कासिनामथ कुष्ठिनाम्
प्रमेहोन्मादिनां चैव तथापस्मारिणामपि १५

इत्यष्टौ वै प्रदिष्टानि निदानानि शरीरिणाम्

विमानवर्णनप्रतिज्ञा

विमानानि प्रवक्ष्यामि यथावदनुपूर्वशः १६

इति भेले अष्टमोऽध्यायः

इति भेलसंहितायां निदानस्थानं समाप्तम्

## विमानस्थानम्

## प्रथमोऽध्यायः

अथातो रसविमानं व्याख्यास्याम इति ह स्माह भगवानात्रेयः

### समसर्वरसोपयोगगुणाः

शरीरं धारयन्तीह षड्रसाः सममाहृताः

### वैषम्ये दोषः

अतोऽन्यथा विकारांस्तु जनयन्ति शरीरिणाम् १

### रसानां दोषाणां च गुणाः

रूक्षो लघुः स्थिरश्शीतः कषायस्तिक्त एव च
तीक्ष्णोष्णावम्ललवणौ कटुर्वापि विकाश्यथ २
शीतः स्निग्धो गुरुर्बल्यः पिच्छिलो मधुरो रसः
कषायतिक्तकटुकः शीतो रूक्षोऽनिलः स्मृतः ३
रूक्षोष्णमम्लं पित्तन्तु कटुकं च प्रचक्षते
श्लेष्मा तु मधुरः स्निग्धः शीतो मन्दः स्थिरो गुरुः ४
इत्येतान् रसदोषाणां सहोत्पन्नान् गुणान्विदुः

### दोषानुरूपा रसगुणाः

तत्र वायुगुणैस्तुल्यान्कषायकटुतिक्तकान् ५
कट्वम्ललवणैस्तुल्यांस्तथा पित्तगुणान्विदुः
मधुरं लवणाम्लौ च विद्यात्कफसमान् रसान् ६

### रसप्रभावः

तस्मादभ्यस्यमानैस्तैः श्लेष्मा देहे प्रवर्धते

### रसानां प्रभावद्वैविध्यम्

अत्रैकत्र कृतो राशिर्द्धिर्महत्वमिहर्च्छति ७

गुणसाम्याद्विवर्धन्ते यथास्वं धातवो नृणाम्
रसैस्तद्विपरीतैश्च यान्त्येते क्षयमाहृतैः ८
यथोदकं समासाद्य शान्तिं गच्छति पावकः

वातादिवर्धनक्षपणरसाः

कषायतिक्तकटुकै रूक्षो रूक्षैर्विवर्धते ९
मारुतः स्निग्धभावैश्च ततोऽन्यैरुपशाम्यति
कट्वम्ललवणैः पित्तमुष्णमुष्णैर्विवर्धते १०
शीतैश्शाम्यति शेषैस्तु गुणानां हि विशेषतः
स्निग्धः स्निग्धैः कफश्चापि वर्धते मधुरादिभिः ११
रसैः शाम्यति रूक्षैश्च कषायकटुतिक्तकैः
एकैकमेकसामान्याद्वर्धयन्ति त्रयस्त्रयः १२
घ्नन्ति चान्यगुणत्वेन रसा दोषं शरीरिणाम्

तैलादीनां वातादिविजये युक्तिः

न वायुस्सह तैलेन स्नेहौष्ण्याद्व्यपलीयते १३
शीतत्वान्मधुरत्वाच्च न पित्तं सह सर्पिषा
रौक्ष्यात्कषायभावाच्च स्निग्धो मधुर एव च १४
न श्लेष्मा मधुना सार्धं देहे पर्यवतिष्ठते
आनूपमांसजा वापि वसा मज्जान एव च १५
तैलवन्मारुतं घ्नन्ति स्नेहौष्ण्यगुरुभावतः
शाकादविष्किराणां च रसा मज्जान एव च १६
घृतवद् घ्नन्ति ते पित्तं शीतमाधुर्यभावतः
कषायतिक्तकटुकं यच्च किञ्चिदिहौषधम् १७
मधुरं तत्कफं हन्ति गुणान्यत्वेन देहिनाम्

पिप्पल्यादित्रयोपयोगे विशेषः

अथ नात्युपयुञ्जीत पिप्पलीं क्षारमेव च १८
लवणं चैव बह्वेतद् भुक्तं दोषाय कल्पते
श्लेष्माणं च्यावयित्वा तु नोत्सहेतापकर्षितुम् १९
पिप्पली पाकमधुरा तस्मात्तां नातिभक्षयेत्
अत्याहृता पचेद्देहं तीक्ष्णोष्णकटुभावतः २०
क्षारं च लवणं चैव भोक्तुं नेहेत केवलम्

भोजने नियमास्तत्प्रयोजनं च

मात्रावदुष्णं स्निग्धं च सात्म्यं स्वादु च भोजनम् २१
अविदाहि च यत् पाके जीर्णे तदुपयोजयेत्
बलवर्णकरं स्निग्धमुष्णं श्लेष्मानिलापहम् २२
विदह्यते न मात्रा च सात्म्यतां च करोत्यथ
स्वादु पुष्टिकरं जन्तोरविदाहि प्रसादनम् २३
नृणामायुष्करं चैव जीर्णे भोजनमिष्यते
न जल्पन्न हसंश्चापि न द्रुतं न विलम्बितम् २४
भुञ्जीताभ्यादृतः स्निग्धं देहे निर्वर्तते रसः

रसाद्युपचयप्रतिपादनम्

यथेह वैद्युतो वह्निः प्रवर्तेत सुदारुणि २५
पच्यमाने तथा भुक्ते रसादिरुपचीयते

वर्षादिगुणाः

जीवयन्ति परं वर्षा हेमन्तः पाययत्यपि २६
ग्रीष्मः पचति चाप्येनं परिणाम इवापरः
भृशमौष्ण्यात्कटुर्ग्रीष्मः सर्वधातुविशोषणः २७
धैर्यस्थैर्यकरं शीतं वर्षामद्यब ---
इत्याह भगवानात्रेयः

इति भेले विमाने द्वितीयोऽध्यायः

## तृतीयोऽध्यायः

### दुर्बलाग्निः

यस्य भुक्तं विपच्यते
भुञ्जानस्यापि चान्नानि बलं वर्णश्च हीयते  १
अल्पं लघ्वपि यच्चान्नं भुक्तं दुःखेन जीर्यति
नाप्नोति बलवर्णौ च दुर्बलाग्निः स उच्यते  २

### विषमाग्निः

कदाचित्पच्यते भुक्तं कदाचिन्न विपच्यते
गुरु वा लघु वा यस्य विषमाग्निः स उच्यते  २

### समाग्निः

मितं पच्येत यस्यान्नमतिभुक्तं न पच्यते
समाग्निं तं नरं विद्यात्समपित्तकफानिलम्  ३

### दोषानुसारेणाग्नयः

नरो भवति तीक्ष्णाग्निः प्रकृत्या वातपैत्तिकः
वातिको विषमाग्निश्च मन्दाग्निश्च कफान्नरः  ४

### हीनाधिकाग्निदोषः

यस्य हीनाधिकस्त्वग्निः क्षिप्रं देहं स मुञ्चति

### समाग्निगुणः

समाग्निश्च समात्मा यः स दीर्घायुष्ट्वमृच्छति  ६

### अत्यग्निप्रतिभोजनम्

गव्यमाहिषवाराहैः कुलीरैर्मत्स्यकर्कटैः

मांसैस्सपललैः स्निग्धैरत्यग्निं प्रतिभोजयेत् ७
गोधानिष्क्वथिते क्षीरे सिद्धं भुञ्जीत पायसम्
पिबेद्दधि ससर्पिष्कं माषसूपेन मिश्रितम् ८
तथा पललसम्मिश्रं कच्छपाण्डरसं पिबेत्
गुडं च तैलसम्मिश्रं कुर्यादन्यच्च तद्धितम् ९

विषमाग्निचिकित्सा

स्निग्धस्य विषमाग्नेस्तु वमनादीनि कारयेत्

मन्दाग्निचिकित्सा

ग्रहणीदूषणीयोक्तं मन्दाग्नेस्तु चिकित्सितम् १०

त्रिविधं भेषजम्

अन्तरौषधपानानि बहिर्लेपे च या क्रिया
शस्त्रकर्मविधानं च भेषजं त्रिविधं स्मृतम् ११

त्रयः पाकाः

मधुरोऽम्लः कटुश्चैव पक्तिमार्गास्त्रयः स्मृताः
कटुर्भवति पक्वस्य पच्यमानस्य चेतरौ १२

वातजविकारोपक्रमः

इहान्नपानं भोज्यं च मधुराम्लं प्रचक्षते
वातजेषु विकारेषु यदा वा तैर्न शाम्यति १३
दद्यादथास्मै स्निग्धाय भिषक् स्नेहविरेचनम्
बस्तिभिर्वा चिकित्सेत ह्यधोभागे च मारुतः १४

पित्तजविकारोपक्रमः

तथा च तिक्तमधुरं पानमन्नं प्रदापयेत्
पैत्तिकेषु विकारेषु यदि वा तन्न शाम्यति १५

कफजविकारोपक्रमः

तस्य स्निग्धस्य वमनं शिरसश्च विरेचनम्
कुर्याद्यथाबलं श्लेष्मा ह्यूर्ध्वभागप्रकीर्तितः १६

देहनिबन्धनानि

शकृन्मूत्रानिलाश्चैव रक्तमांसादयश्च षट्
विद्यान्निबन्धनानीति तानि देहेषु देहिनाम् १७

बलादित्रैविध्यम्

बलं वयः शरीरं च प्रत्येकं त्रिविधं स्मृतम्
उत्तमाधममध्यं तु भेदेनाथ निशामयेत् १८

सात्म्यलक्षणम्

आहारश्च विहारश्च सेव्यमानौ क्रमेण तु
कालेन प्रकृतिं यातस्तदाहुः सात्म्यलक्षणम् १९
इत्याह भगवानात्रेयः

इति भेले विमाने तृतीयोऽध्यायः

चतुर्थोऽध्यायः

अथातो रोगप्रकृतिविनिश्चयं व्याख्यास्याम इति ह स्माह
भगवानात्रेयः
प्रमृश्य दृष्ट्वा पृष्ट्वा च परीक्षेतातुरं भिषक्
पूर्वं तु रोगविज्ञानं ततः पश्चाच्चिकित्सितम् १
रूपं छायामुपचयं प्राग्व्याधेर्व्याधितस्य च
दृष्ट्वा भिषक् परीक्षेत प्राकृतं वैकृतं तथा २
ज्वरस्य साम्यं वैषम्यं गात्रं वा श्लक्ष्णकर्कशम्
दृष्ट्वा स्पृष्ट्वावगच्छेद्धि शैत्यमौष्ण्यं च पाणिना ३

मातापितृसमाचारं सात्म्यं गर्भेण दौहृदम्
व्याधिकालपरीणामं शकृन्मूत्रविवर्णताम्  ४
पूर्वरूपसमुत्थानं शरीराग्निवयोबलम्
प्रकृतिं जन्मदेशं च भोजनं च यथोचितम्  ५
व्यायामनिष्ठासात्म्यं च मात्रामात्रे च भोजने
प्रश्नोक्तानि विजानीयाद्यदन्यदपि तद्विधम्  ६

प्रकृतिपरिचयः

केचिदिच्छन्ति मुनयो दोषमेकमिहाधिकम्
विकारस्याविशिष्टत्वादनिष्टं कारणं च तत्  ७
रूक्षासहो नरो यस्तु स वातप्रकृतिः स्मृतः
पैत्तिकोऽम्बुसहश्चापि मधुराम्लासहः कफात्  ८
स्वभावप्रभवो ह्येष सहोत्पन्नो गुणागमः
प्रकृतिं वै विजानीयात्तस्य वक्ष्यामि लक्षणम्  ९

पराः प्रकृतयः

अव्यक्तं च महांश्चैव महाभूतानि पञ्च च
पराः प्रकृतयस्सप्त स्वभावः काल एव च  १०
तेभ्यो भवन्ति भूतानि तान्येव प्रतियान्ति च
इन्द्रियाणीन्द्रियार्थाश्च बुद्धयः पञ्च तास्तथा  ११

वातप्रकृतिनिष्पत्तिः

ऋतुकाले यदा नारी रूक्षाण्यन्नानि सेवते
उदावर्ते तथापीह कर्म चातिनिषेवते  १२
तदैवं वातसन्दुष्टं रक्तं गर्भाशयस्थितम्
तद्विधेनैव शुक्लेन यदा योगमुपैति वै  १३
तदा वातप्रदुष्टेन शुक्लेन रुधिरेण च

वातप्रकृतितामेति गर्भः प्रागात्मनः स वै १४

कफपैत्तिकप्रकृतिनिष्पत्तिः

एवमेवर्तुकाले वै भजन्त्याः कफपैत्तिकम्
श्लैष्मिकी पैत्तिकी चापि प्रकृतिर्जायते ततः १५

वातप्रकृतिलक्षणम्

ह्रस्वः शीघ्रः कृशश्चाणुः प्रलापी परुषप्रियः
स्तब्धाङ्गो विषमश्लिष्टो गणरूपे गणे धृतिः १६
सहः क्लेशस्य विस्रम्भी रूक्षत्वगनवस्थितः
खरमूर्धजरोमाङ्गः क्षिप्रग्राही तथा स्मृतः १७
स्वप्नेषु चोष्ट्रेणायाति वियत्यपि तु गच्छति
यस्योपशेते सुस्निग्धं स वातप्रकृतिर्नरः १८

पित्तप्रकृतिलक्षणम्

शिथिलाङ्गोऽगरुगन्धश्चण्डः शीघ्रो महाशनः
वलीपलितखालित्यशीघ्रपाकी तथाक्षमः १९
वृत्ताक्षः क्रोधनो यश्च दुर्बलो दुर्बलेन्द्रियः
नाम्लाशः शीतशीताशी दुष्प्रजाः शीतलप्रियः २०
अतिवर्णोऽतिमेधावी स्वप्ने पावकदृक् तथा
शीघ्रमावाति यः स्नातः पैत्तिकप्रकृतिर्नरः २१

श्लेष्मप्रकृतिलक्षणम्

सुस्निग्धः श्लक्ष्णबद्धाङ्गः सुभगः प्रियदर्शनः
दृढस्मृतिश्चिरग्राही दृढभक्तिपरायणः २२
प्रियमांसोष्णकटुकः प्रिययोषिद्बहुप्रजः
क्षमावान् बलवान् धन्यः शीतालुरशनप्रियः २३
चिराद् दृढव्याधिरथो मितवागल्पभुक् स्मृतः

दीर्घदर्शी महोत्साहो धीरः क्लेशसहस्तथा २४
रोमदन्तनखैः केशैर्बहुलैर्यस्सुबन्धनैः
चिरादावाति च स्नातः स्वप्ने पश्यति चोदकम् २५
यस्तु रूक्षं तु सहते स श्लेष्मप्रकृतिर्नरः

संसृष्टप्रकृतिलक्षणम्

संसृष्टप्रकृतिं विद्यात्संसृष्टैश्चापि लक्षणैः २६

प्रवरमध्यमजघन्यप्रकृतयः

निवृत्ता प्रकृतिर्धन्या द्वन्द्वा भवति मध्यमा
सन्निपातात्मिका या तु जघन्या सा प्रकीर्तिता २७
इत्याह भगवानात्रेयः

इति भेले चतुर्थोऽध्यायः

पञ्चमोऽध्यायः

अथातो व्याधितरूपीयं व्याख्यास्याम इति ह स्माह भगवानात्रेयः

गुरुव्याधितलघुव्याधितौ

गुरुव्याधिर्नरः कश्चिन्मूर्त्या चैव बलेन च
लघुव्याधिः नरस्त्वन्यः सत्त्वादिभिरनन्वितः १
गुरुव्याधिरिवाभाति भिषक् तत्र प्रमुह्यति

गुरुब्याधितस्य लघुव्याधितचिकित्साकरणजव्यापत्तिः

तत्राल्पमात्रं भैषज्यं सेवितं गुरुरोगिणाम् २
न निर्दहत्यतः सर्वान्दोषानल्पेन तेजसा
मूर्छा छर्दिस्तिमितता जृम्भा च गुरुगात्रता ३
तृष्णा सन्ततभावश्च भवन्त्येतानि तस्य तु

तत्र परिहारः

मुस्ता कुष्ठं हरिद्रे द्वे प्रग्रहातिविषाभयाः ४
भल्लातकं वयस्था च चित्रकः सुरदारु च
एतैरास्थापनं तच्च कुर्याद् गोमूत्रसंयुतैः ५
पूर्णादिष्टानदिष्टांश्च तथा शान्तिं नियच्छति
आरग्वधं सप्तपर्णं मदनं स्वादुकण्टकम् ६
शार्ङ्गेष्टां कटुकां पाठां नक्तमालं सवत्सकम्
एतदारग्वधार्थं तु कुर्यादास्थापनं भिषक् ७
इत्याह भगवानात्रेयः

इति भेले पञ्चमोऽध्यायः

षष्ठोऽध्यायः

अथात ऋतुविमानं व्याख्यास्याम इति ह स्माह भगवानात्रेयः

ऋतुपरिवृत्त्या धातुक्षयवृद्धी

आदित्यगतिवैशेष्यादृतूनां परिवर्तनात्
क्षयं वृद्धिं च गच्छन्ति यथास्वं धातवो नृणाम् १

वर्षर्तुचर्या

भूमिबाष्पात्पुरोवाताद्धनच्छायाप्रसङ्गतः
महीकलुषसन्दुष्टात्पीयमानान्नवोदकात् २
ग्रैष्मिकात्कृशभावाच्च प्राणे दुर्ब्बलतां गते
वर्षासु देहिनामग्निर्मृदुत्वमुपगच्छति ३
ततो विष्टम्भजो वायुर्यस्माद्धीतः प्रकुप्यति
तन्न सेवेत वर्षासु कट्वम्ललवणान् रसान् ४
मुद्गयूषेण वाश्नीयात्पुराणान् शालिषष्टिकान्

अथवा यवगोधूमं सृष्टवाते हितं स्मृतम् ५
पटोलानि च तक्रं च जाङ्गलांश्च रसान् लघून्
कौपं दिव्यं जलं सिद्धं भजेदास्थापनानि च ६

शरच्चर्या

असंस्थितत्वाद्वर्षासु जलमम्लं विपच्यते
तस्माद्विवर्धते पित्तं यथाम्लैश्च तथाशनैः ७
सूर्योपतापात्सहसा गत्वा चैवौषधीकृतम्
वर्षासु निचयं पित्तं कोपं शरदि गच्छति ८
स्नानानुलेपनं तस्माच्छीतं शरदि कारयेत्
वीजयेत्तालवृन्तैश्च विगाहेत सरस्सु च ९
लाजसक्तुं पिबेच्चापि शर्करामधुवारिभिः
मुद्गयूषेण चाश्नीयात्पुराणान् शालिषष्टिकान् १०
रसान् मधुरकांश्चापि जाङ्गलान् सर्पिषा कृतान्
विदारीक्षुरसं द्राक्षां सेवेतान्यच्च तद्विधम् ११
गतपित्तप्रवेगश्च शरत्काले घृतं पिबेत्
तथास्याप्याय्यते देहः शेषा दोषाश्च यान्त्यधः १२

हेमन्तचर्या

पश्चाद्वातस्य रूक्षत्वाच्छीतलत्वादृतोस्तथा
हेमन्तेन निगच्छन्ति खरत्वं धातवो नृणाम् १३
तस्मात्स्नेहं बहुविधं स्नानं चोष्णेन वारिणा
भजेत्खरत्वपारुष्ये तथाभ्यङ्गात्प्रशाम्यति १४
शकुनानौदकान्मत्स्यान् स्नेहाम्ललवणान्वितान्
आनूपानि च मांसानि सेवेतान्यच्च तद्विधम् १५
कटुर्हि पश्चिमो वायुः शैत्यं तीव्रं च वारिणः

अत्यर्थं रूक्षयेद्वायुः शरीरं रूक्षभोजनात् १६
गुरुप्रावरणश्च स्यादातपाग्नी च संश्रयेत्
रूक्षे हि तेजसा जन्तोः शरीराद्ध्रियते बलम् १७
आपो हि शीतमधुरा हेमन्ते तु भवन्त्यथ
तस्मात्कफस्तथा ताभिः स्निग्धैरन्नैश्च चीयते १८

शिशिरचर्या

शीतलत्वादृतोश्चापि न तावत्परिभिद्यते
तस्मात्तैलगुडोपेतां वारुणीं शिशिरे पिबेत् १९
विविधानि च मांसानि भक्षयेच्च प्रकारतः

वसन्तचर्या

एवं तु निचितः श्लेष्मा शीतत्वादिह देहिनाम् २०
द्रवतामेति संस्पृष्टो वसन्ते सूर्यतेजसा
रविर्हि मध्यमां काष्ठां वसन्ते प्रतिपद्यते २१
दह्यतामिव शैलानां नृणामङ्गे प्रकुप्यति
ततः श्लेष्मा द्रवीभूतो हृदयं व्यपलिम्पति २२
तस्माच्छर्द्यविपाकौ च दृश्येते शिशिरात्यये
तस्माद्वसन्ते श्लेष्मघ्नं मधुमार्द्वीकमीरितम् २३

इति भेले षष्ठोऽध्यायः

इति भेलसंहितायां विमानस्थानम् समाप्तम्

## शारीरस्थानम्

## द्वितीयोऽध्यायः

मानोऽवतिष्ठते
जातस्य दशमे मासे नामगोत्रे सुसंस्कृते १

### कौमारे शुक्रानुन्मेषः

तरुणस्य कुमारस्य वर्धमानेषु धातुषु
अस्थिमज्जसु पूर्णेषु शुक्रं न प्रतिपद्यते २

### षोडशे शुक्रप्रतिपत्तिः

अङ्गाङ्गेषु प्रवृद्धेषु प्रतिमूलेषु धातुषु
शुक्लं च षोडषे वर्षे सुव्यक्तं प्रतिपद्यते ३

### वृद्धे शुक्लक्षयः

तथा वृद्धस्य जन्तोश्च परिक्षीणेषु धातुषु
विवेका न यथापूर्वं विविच्यन्ते परिक्षयात् ४
ततोऽल्परेता भवति सुजीर्णो दुर्बलोऽथवा
न पश्यति नरः शुक्लं सर्वधातुपरिक्षयात् ५

### नवतितः परं रक्तादिक्षयः

रक्तं मांसं वसास्थीनि मज्जा शुक्लं तथानलः
शकृन्मूत्रे च तैर्मन्दं विद्यान्नवतितः परम् ६

### गर्भाग्रहणहेतुस्तच्चिकित्सा च

इह नर्छति गर्भं स्त्री वातेनोपहता तथा
योनिदोषेण चान्नेन न हि वन्ध्यास्ति ना च न ७
वमनं रेचनं चैव बस्तिमास्थापनं तथा
तस्मात्तत्कारयेत्स्त्रीणां प्रसिद्धाः प्रसुवन्ति वै ८

इन्द्रियाणां स्वविषयनियतिः

अथात्र भवति प्रश्नः कस्माच्छब्दं न नासया
गृह्णास्यास्येन वा गन्धं तुल्यं सर्वत्र खं यदि ९
त्वग्भागे च समे कस्मान्न गृह्णात्यन्यथा रसम्
इति तद्वचनं श्रुत्वा प्रत्युवाच पुनर्वसुः १०
घ्राणं गन्धं च भौमं हि रूपं चक्षुश्च तैजसम्
संस्पर्शं स्पर्शनं वायोः श्रोत्रं शब्दात्मखं तथा ११
रसनं च रसो ह्याप्यं तस्मादेतैरिहेन्द्रियैः
यथास्वं तुल्ययोनित्वाद्विषयग्रहणं स्मृतम् १२
स्वं स्वं हि विषयं धातुर्विजानात्यात्मनान्वितः
आत्मेन्द्रियमनोर्थानां बन्धाच्चेति समादिश १३
इत्याह भगवानात्रेयः

इति भेले द्वितीयोऽध्यायः

तृतीयोऽध्यायः

अथातोऽसमानगोत्रीयं शारीरं व्याख्यास्याम इति ह स्माह
भगवानात्रेयः

गर्भाधानविधिः

इहासमानगोत्रान्तु ऋतुस्नातां स्त्रियं व्रजेत्
मेधाविनमरोगं सा पुत्रमेवं प्रसूयते १
बीजदोषाद्यथा सस्यं न सम्यक् विप्ररोहति
मातापित्रोस्तु दोषेण तथा गर्भः प्रणश्यति २
तस्मात्सम्यग्रसाहारावृतुकालेऽथ दम्पती
रहस्संयोगमेयातां स्मरन्तौ मनसा विभुम् ३

गर्भविकृतौ गर्भाभावे च हेतुः

विकृताः स्युरगर्भा वै रसापथ्यनिषेवणे
सन्धारणाद्वा वेगानां योनिदोषेण वा पुनः ४
योनौ दोषेपसृष्टायां न गर्भो ह्यवतिष्ठते
तथैव बाह्ययोनौ हि निर्वाहिण्यां च सर्वदा ५

वायुर्गर्भे गर्भनाशे च हेतुः

गृह्णाति वायुर्यस्यां च योनौ शुक्रमुपागतम्
बिभर्ति गर्भिणि गर्भं शुद्धार्तवसमन्विता ६
च्यवते च यदा चासौ तदा गर्भः प्रणश्यति
वातोदरं स्त्रियास्तद्वै तस्माद्रूक्षाणि वर्जयेत् ७

स्त्रीपुंनपुंसकगर्भनिमित्तानि

भवत्यभ्यधिके शुक्ले पुरुषः शोणितेऽङ्गना
नपुंसकं तयोः साम्ये तस्माच्छुक्लं विवर्धयेत् ८

यमलबहुगर्भहेतुः

यदा तु कललं वायुस्तद् द्विधा कुरुते बली
यमौ तदा सम्भवतः कृष्णात्रेयवचो यथा ९
तत्र शुक्लोत्तरे भागे पुमान् रक्तोत्तरेऽङ्गना
अनेनैव च कल्पेन यमकेष्वपि निर्दिशेत् १०
वायुस्त्वश्ववराहाणां देहेषु बलवान् पुनः
स तत्र कललं भित्त्वा करोति बहुपुत्रताम् ११

नागोदरम्

नाप्नोति च यद् गर्भो रसं दुष्टैः सिरामुखैः
असंपूर्णो वसन्नागः तथा वर्षाणि तिष्ठति १२
सम्पूर्णगात्रो भवति यदा स रसभावितः

तदा सूतो यथाकालं गर्भः स्त्रीकुक्षिविच्युतः १३

गर्भव्यापत्तिहेतवः चिकित्साविधिश्च

ये च ते विंशतिः प्रोक्ता योनिदोषाश्चिकित्सकैः
एतैश्चान्यैश्च बहुभिर्गर्भो व्यापद्यते स्त्रियाः १४
तस्मादेतांश्चिकित्सेत्तु दोषान् पुत्रचिकीर्षया
इभाश्वगर्भसारूप्यं प्रयोगाद्धि भवेच्छुचि १५
वाय्वाकाशर्तुयुक्तो हि दैवतेष्वितरेषु तु
अन्तर्जातो जातवेदाः प्रभावायोपकल्पते १६

सात्त्विकादिगर्भोत्पत्तिः

ऋतौ यदा स्त्रीपुरुषौ प्रसन्नमनसौ रहः
उपेयातामथ तदा गर्भो भवति सात्त्विकः १७
ऋतौ यदा स्त्रीपुरुषौ व्यायस्तमनसौ भृशम्
उपेयातामथ तदा गर्भो भवति राजसः १८
ऋतौ यदा स्त्रीपुरुषौ प्रदीनमनसौ रहः
उपेयातामथ तदा गर्भो भवति तामसः १९
लक्षणं च समुत्थानमित्येतत्समुदाहृतम्
तिसृणां सत्त्वयोनीनां मिश्रांस्तेनैव लक्षयेत् २०
इत्याह भगवानात्रेयः

इति भेले शारीरे तृतीयोऽध्यायः

## चतुर्थोऽध्यायः

अथातः पुरुषनिचयं शारीरं व्याख्यास्याम इति ह स्माह
भगवानात्रेयः

रसजः पुरुषः व्याधयश्च

इह खलु भो अयमन्नात्पुरुषो भवति । रसजन्मानोऽस्य व्याधयो भवन्ति । तद्यथा खल्वयं पुरुषो रसजन्मा रसजीवी रसज्वलनो रससमाधिको रसजीवनश्च भवति । रसानामसम्यगुपयोगान्मिथ्यो-पयोगात्तद्विकारानृच्छति । न कश्चिन्मिथ्योपयोगादजीर्णापथ्यभो-जनात्स्वस्थो भवति १

## आहारपाकविषये विचारः

अथात्र प्रश्नो भवति । कोऽत्र खल्वस्याहारं पचति वातः पित्तं श्लेष्मानुपानं वेति । नेत्याह भगवान् पुनर्वसुरात्रेयः । यद्येते पाकहेतवः स्युस्तर्हि न कश्चिदिह दुर्बलाग्निः स्याद्वातादीनां सन्निहितत्वात् सानुपानत्वाच्च । अथास्योष्मा तेजश्च शरीरस्थमाहारं पचतः । ते कायाग्निरिति विद्यात् २

## आलोचकादिभेदाः

तत्र भेल आत्रेयमिदमुवाच - भगवन् । पञ्चधा ये शारीराः पठ्यन्ते आलोचकराजकभ्राजकसाधक पाचकभेदेन तेषां कथमिदं पञ्चाभि-धायिनां पृथक्त्वं भवतीति ३

## आलोचकनिरूपणम्

अत्रोवाच भगवानात्रेयः तत्रालोचको नाम वर्षाशीतातपप्रवृद्धः । स द्विविधः चक्षुर्वैशेषिको बुद्धिवैशेषिकश्चैति । चक्षुर्वैशेषिको नाम य आत्ममनसोस्सन्निकर्षज्ञानमुदीरयित्वा चित्ते चित्तमप्याधाय संस्वेद-जाण्डजोद्भिज्जजरायुजानां चतुर्णां भूतग्रामाणां लक्षणसंस्थानरूप-वर्णस्वरैरुच्चावचानां पुष्पफलपत्राणां रूपनिर्वृत्यर्थमेकैकस्य द्वयोस्त्र-याणां सर्वेषां वा युगपत्प्रणिपतितानां चक्षुषा वैशेष्यमुत्पादयतीति ४

बुद्धिवैशेषिको नाम यो भ्रुवोर्मध्ये शृङ्गाटकस्थः सुसूक्ष्मानर्थानध्या-त्मकृतान् गृह्णाति ज्ञानेन ज्ञेयं ज्ञानं कृत्स्नज्ञेयकैवल्यार्थेषु दर्शयति ।

तस्माद्ज्ञानज्ञेयं ज्ञात्वा ज्ञानं गृह्णाति । गृहीतं धारयति । धारितं प्रत्युदाहरति अतीतं स्मरति प्रत्युत्पन्नं कृत्वाऽनागतं प्रार्थयति जातमात्रश्च पुनरनुपदिष्टस्वभावं मातृस्तन्यमभिलषति । ध्याने प्रत्याहारे योजनाच्च बुद्धिवैशेष्यमुत्पादयतीति ५

भ्राजकनिरूपणम्

तत्र भ्राजको नाम यो ह्यस्य शरीरं लक्षणं चोपगमयति प्राधान्यं प्रदर्शयति शिरःपाणिपादपार्श्वपृष्ठोदरजङ्घास्यनखनयनकेशानां च प्रतिभावृद्धिविशेषानुत्पादयति भ्राजयतीति भ्राजकः ६

राजकनिरूपणम्

प्रभविष्णुत्वेन्द्रियप्राबल्याद् बुध्यवस्थाहंकारेण वाभिमतमर्थमर्थेभ्य आत्मकृतमाधत्ते । चक्षुश्रोत्रघ्राणरसनस्पर्शनवाक्पाणिपादपायूपस्थेभ्यः सर्वेषां विषयार्थानां स्वभावोपरक्तानां परस्परेभ्यो रागमुत्पादयतीति । अन्तर्मध्ये च पित्तस्थानमन्तरं प्रविश्य रागं जनयतीति राजकः ७

साधकनिरूपणम्

साधको नाम यः शब्दस्पर्शगन्धेभ्योऽर्थकामेभ्यश्च देवपितृऋषिभ्यश्च इह चामुत्रकाणां च पदार्थानां निश्रेयसमधिकृत्य सर्वपदार्थानाप्नोति स्वयुक्त्या साधयतीति साधकः ८

पाचकनिरूपणम्

पाचको नाम अशितपीतलीढखादितमाहारजातं जातवीर्यं पाचयतीति पाचकः । यः स्वकं काममेवाग्निं प्रपूरयति हर्षयति ९

भवन्ति चात्र

योऽयं निर्दहति क्षिप्रमाहारं सर्वदेहिनाम्

अपानमद्यनिदनः कायाग्निः परिपठ्यते १०
प्रभावलक्ष्य स्सं । युक्तो जीवस्येह सनातनः
नाभिमध्ये शरीरस्य विज्ञेयं सोममण्डलम् ११
सोममण्डलमध्यस्थं विद्यात्तत् सूर्यमण्डलम्
प्रदीपवच्चापि नृणां तस्य मध्ये हुताशनः १२
देहिना भोजनं भुक्तं नानाव्यञ्जनसंस्कृतम्
सूर्यो दिवि यथा तिष्ठन् तेजोयुक्तो गभस्तिभिः १३
विशोषयति सर्वाणि पल्वलानि पयांसि च
तद्वच्छरीरिणां व्यक्तं जाठरो नाभिसंस्थितः १४
मयूखैः क्षिप्रमादत्ते सूर्यकान्तो मणिर्यथा
क्षिप्रं सम्यक् प्रदहति गोमयं काष्ठमेव च १५

जाठराग्निपरिमाणम्

स्थूलकायेषु सत्त्वेषु यवमात्रप्रमाणतः
ह्रस्वकायेषु सत्त्वेषु त्रुटिमात्रप्रमाणतः १६
क्रिमिकीटपतङ्गेषु वायुमात्रोऽवतिष्ठति

कायचिकित्सकः

यस्तं चिकित्सेत्सीदन्तं व्याधिना चापि देहिनाम् १७
आयुर्वेदाभियोगेन स वै कायचिकित्सकः

अनशने व्यापदः

रसं च शोणितं चैव मेदो मांसमथापि च १८
महत्यनशने नृणां सर्वाण्येतानि खादति
अग्नीषोमात्मकं सर्वं जगत्स्थावरजङ्गमम् १९
अग्नीषोमात्मकाः सर्वे देहिनस्तु चतुर्विधाः
सूर्यात्मकानि सर्वाणि तथा सोमात्मकानि च २०

महत्यनशने नृणां तेनान्त्राणि स खादति

जाठराग्नेस्सन्निवेशस्तत्पालनं च

जाठरो जलसम्भूतः पावकः पवनैस्सह २१
प्रदीप्यते नृणां कोष्ठे सति वेन्धनपूरितः
इक्ष्वाकुकोशमास्थाय यथा दीपः स्थिरेऽम्भसि २२
तिष्ठते तिमिरे सक्तो न तथा चलितेऽम्भसि
एवं शरीरिणां कोष्ठे वैकृतेन पुनः पुनः २३
अग्निर्वैषम्यमाप्नोति पूर्यमाणः पुनः पुनः
स च यत्नेन वै रक्ष्यो विपन्ने दोषदर्शनात्
छर्द्यते चातिसार्येत विकारं चायमृच्छति २४
असावसम्प्राप्तकालो य एवं म्रियते वर्षशतं हि पुरुषायुस्तच्चावाप्तुं जीर्णलघुपथ्यभोजनानुवर्तिना भवितव्यमिति २५

अलसकादिसिद्ध्यसिद्ध्योर्युक्तिः

तत्राह कस्मादलसकविषूचिकावान् सद्य एवागदी भवति कश्चिन्म्रियत इति अत्राहरूक्षस्याध्यशनेनोत्पीडिता वातपित्तश्लेष्माणः ऊर्ध्वमधो वा नानुलोमा भवन्ति उद्वृत्तैस्तत्र तैः सद्य एव म्रियते । स्निग्धस्याध्यशनोत्पीडिता वातादयः ऊर्ध्वमधो वाऽनुलोमाः स्वाङ्गदेशांस्तु प्रपद्यन्ते तत्र तैः सद्य एवागदी भवति २६

अन्तर्गुहादि

अथ दशान्तर्गुहाः दश बहिर्गुहाः । तद्यथा--द्विचक्षुषी द्विनासिके द्वे श्रवसी कण्ठनाडीगुदमेढ्रवायुस्रोतांसीति दश अन्तर्गुहाः दश धमन्यो हृदये निबद्धा भवन्ति । तां प्रभवे चतुरंगुलमात्रं गत्वा विंशतिर्भवन्ति । एवमेता दश धमन्यः षष्टिर्भवन्ति । तत्र तु भवन्ति त्रीणि शतसहस्राणि षष्टिरियं जालानि सिराणां । तद्यथा--वृक्षः

शाखावृतः फलपलाशैरवतरति सर्वत्र । तद्यथा वाहन्योऽश्मभिरवततः तथायं सिराभिरवततः । रोमकूपे रोमकूपे ह्यस्य सिरामुखं भवति यतः स्वेदः क्षरतीति २७

अपस्मारस्य कालविशेषसंभवे युक्तिः

तत्राह कस्मादयं पुरुषो न सन्ततमपस्मरतीति अत्रोच्यते--यथा सरितां प्रादुर्भावे वारिजानि सत्त्वानि प्रादुर्भवन्ति ह्रासे वा ह्रसन्ति । यदा यदा रसवेगं प्राप्नुवन्ति तदा तदा अपस्मारयन्ति । तस्माद् द्व्यहात्र्यहात् पक्षान्मासान्तराच्चापस्मरन्ते २८

अपस्मारं प्रति रक्षोवेतालादीनामहेतुत्वम्

केचिद्रक्षोपहत इत्याहुः तच्चायुक्तम् । यदि ह्येवं स्याद् दृश्येरन् पुरुषशरीरे प्रहारादीनि वा । ततश्च नैवम् । वेतालाभिभूत इति चेत्तच्चाप्यनुपपन्नम् । पुण्यानि ह्येषां मनांसि ध्यायन्ति । यदि चैवं स्याद्युगपदभिवातं प्राप्नुयुः । अनेकस्त्रीपुरुषवहनानि तेषां वृन्दानि । न चैवं कदाचिद्भवति । तस्मात्तदेव पाठ्यं रसोपहतमिति चेदेवमेव । रसप्रविवेककाले तृतीयकचतुर्थकावपि दृश्येते ज्वरावपि । नेषत्रां ह्यननार्थः २९

गर्भावयवोत्पत्तौ पौर्वापर्यविचारः

अत्राह किं खल्वस्य गर्भस्य प्रथमं सम्भवति हस्तौ पादाविति बडिशः तत्प्रतिष्ठितत्वात् शरीरस्य । पश्चाद्गुद इति शौनकः तदाश्रितत्वाद्वायोः । नाभिरिति खण्डकाप्यः तत्र नाडीनां प्रतिष्ठितत्वात् । हृदयमिति पराशरः विज्ञानमूलकानां तन्मूलत्वात् । शिर इति भरद्वाजः शरीरस्य तन्मूलत्वात् । चक्षुरिति काश्यपः । नेत्याह भगवान्पुनर्वसुरात्रेयः । तस्मादर्बुदमेवास्य प्रथमं सम्भवति । तत्र सर्वे शरीरप्रदेशास्सम्भवन्ति अर्बुदस्नेहोत्पन्नाः ३०

गर्भस्याहारः

अत्राह--किं नु गर्भो मातुरुदरस्थोऽश्नाति न वेति । अत्रोच्यते नाश्नाति । यदि ह्यश्नीयात् स्यादस्य पुरीषमतीतकालं न चेदमस्ति । कथं तर्हि नाभ्यां नाडी प्रतिष्ठिता तस्यामपरा मातुर्हृदयमाश्रिता तया मातुरन्नरसोऽभिवहन् गर्भं प्रीणयत्यभिवर्धयति । तद्यथा कुल्याः केदारमभिसंश्रयन्त्यो भावयन्ति तद्वत् ३१

गर्भसन्निवेशविचारः

तत्राह कथं गर्भो मातुरुदरे तिष्ठतीति । ऊर्ध्वमिति शौनकः । अवाक्छिरा इति भरद्वाजः । नेत्याह भगवान्पुनर्वसुरात्रेयः । यद्यूर्ध्वं तिष्ठेत् तर्हि मातृघाती स्यात् । यद्यवाक्छिराः स्वघाती स्यात् । कथं तर्हि तिर्यक् सर्वैरयमङ्गप्रत्यङ्गैः प्रतिभुग्नः शेते ३२

तस्य तदनन्तरं तत्प्रथमं प्रतिपद्यते । तस्मात्तस्य शिरः प्रथमं पुनर्वसुरात्रेयः प्रतिपद्यते । तदस्य गुरुतरं भवतीति । अथ खलु वृक्को मेदो गुरुरिति संप्रवृद्धौ परस्परमभिवर्धयन्ति ॥

रसजः पुरुषः

तत्र श्लोकः

ऊष्मा रसस्थो देहेऽस्मिञ्जीवनं गृह्य तिष्ठति
रसोद्भवः पुमांस्तस्माद्रसो जीवनमुच्यते ३३
इत्याह भगवानात्रेयः

इति भेले शारीरे चतुर्थोऽध्यायः

पञ्चमोऽध्यायः

अथातः शरीरनिचयं व्याख्यास्याम इति ह स्माह भगवानात्रेयः

ओजस्तेजसी

इह खल्वोजस्तेजः शरीरे नित्ये च भवतः तयोः स्थानानि द्वादश भवन्ति । तद्यथा--त्वक्शोणितमांसमेदोऽस्थिमज्जाशुक्लस्वेदपित्त-श्लेष्ममूत्रपुरीषाणीति । तान्यव्यापन्नानि सुखमित्युच्यते । व्याप-न्नैस्तु वातपित्तश्लेष्माणः प्रदुष्टा रसादिषु विकारानुपजनयन्ति १

चतस्रो योनयः

अथ योनयश्चतस्रो भवन्ति । तद्यथा--जरायुजाण्डजोद्भिज्जस्वेद-जाश्चेति । तत्र जरायुजा जरायुयुक्तास्संभवन्ति पशुमृगमनुष्यादयः । शकुनमत्स्यकच्छपसर्पप्रभृतयोऽण्डजाः । यूकामत्कुणपतङ्गा-शीविषमक्षिकादयः स्वेदजाः । उद्भिज्जास्तु तृणलतावृक्षवनस्पतय इति २

वृक्षादिलक्षणम्

तत्र पुष्पफलवन्तो वृक्षाः । अपुष्पफलवन्तो वनस्पतयः । सपुष्पाः सफलाश्चापुष्पाश्चाफलाश्च वीरुधः । फलपाका लताश्चौषधयः । तत्र ये श्वेतक्षीराः सौम्याः रक्तक्षीराः काद्रा वारुणा वालिग्रहा इति ३

विकृताविकृतगर्भनिमित्तम्

इह खलु त्रिषु दशरात्रेषु पुमान् रसेन संयुज्यते । आसां तु खलु चतसृणां योनीनां ऋतुकाले यदा रसाः सम्यक् प्राप्तिं वा गच्छन्ति तदा गर्भः तिष्ठत्यविकृतः विपर्यये विपर्ययः ४

रजस्वलागमननिषेधः स्त्रीपुंगर्भग्रहणकालश्च

त्र्यहन्तु खलु पुराणरुधिरं परिवर्जयेत् । किञ्च तत्पुराणम् यदादित-स्त्र्यहं परिस्रवदृतकाले तत्पुराणम् ॥ तस्मिन् त्र्यहे गर्भोपक्रमणे न तिष्ठति । अवस्थितो वा नायुषि समर्थो भवति । निर्गते तु त्र्यहेण पुराणे रुधिरे चावस्थिते शुद्धस्नातायाश्चतुर्थषष्ठाष्टमदशमद्वादशेषु अहस्सु गर्भोवक्रममाणः पुमान् भवति । पञ्चमसप्तमनवमैकादशेषु

स्त्रीत्वायोपकल्पते । स एष आसप्तरात्रात्सर्वसञ्चारोऽभिदधत्यतः परमसञ्चारोवकृत्वाद्बाल्पात् ५

रजोऽदर्शने दर्शने च निमित्तम्

स्त्रीणां खलु शोणितं शरीरं शोषयति तस्मान्न ताः रजः पश्यन्ति । परिपूर्णधातुशरीरास्तु यदा भवन्ति तदा विवेकजललोहितं मासे मासे प्रतिवेदयन्ति । प्रतिगतप्रवेशं च तत्पुनर्मासेन समागच्छत्यार्तवम् ६

प्रदरस्तच्चिकित्सासंग्रहश्च

यदा तु तच्छोणितं दुष्टं मार्गं प्रतिपद्यते तदा स्त्रीणां प्रदरो भवति । तं शरीरं शोषयन्तं लोहितपित्तभेषजेनोपक्रमेत ७

गर्भिण्या रसस्य त्रिधा विनियोगः

गर्भिण्यास्तु त्रिधा काये रसोऽभिनिर्वर्ततेष गर्भत्वाय स्तन्यत्वाय रसत्वाय चेति ८

स्त्रीपुंनपुंसकयमलगर्भलक्षणम्

इह खलु भोः गर्भात्स्थिरादन्तःस्थादायतमुदरं भवति मध्ये नार्याम-न्तर्गतायाम् । स्थूलमूलसंस्थितसंवृत्तमच्छिद्रं पुरुषेऽन्तर्गते । द्रोणी-वोदरं भवत्युभयोरन्तर्गतयोः । वामं पार्श्वमायतं मातुरुदरस्था स्त्री दक्षिणे पुमान् मध्ये नपुंसकम् । वाममक्षि ह्लसति नार्यामन्तर्गतायाम् पुरुषे दक्षिणम् उभे नपुंसके । सव्यं पादं पूर्वं प्रक्रामति सव्येन चा-क्ष्णा भ्रुवा च पूर्वं प्रति कुरुते चेष्टते च सव्येन पार्श्वेन प्रायः संविश-ति स्त्रीसंज्ञानेषु च प्रायशो दौहृदं कुरुते नार्यामन्तर्गतायाम् । विपर्यये तदतः पुरुषं बिभर्तीति विद्यात् ९

गर्भशरीरनिर्वर्तककायाः

अथ इह खलु गर्भस्य षड्भ्यः स्थानेभ्यः शरीरमभिनिर्वर्तते । तद्यथा-

जलकायाद्वायुकायात्तेजः कायात्पृथिवीकायादाकाशकायाद्रसकायाच्चेति १०

षड्धातुमयः पुरुषः पार्थिवादिलक्षणम्

एड्धातुरेवायं पुरुषो भवति । धातवः पुनः पञ्च भूतानि ब्रह्म यदव्यक्तम् ११

तत्र यत् खरकठिनम् तद्यथादन्तकेशरोमनखपुरीषस्नाय्वस्थि गन्धज्ञानघ्राणसङ्घातगौरवाणीति । यद्द्रवं स्निग्धं मृदु वा तदौदकम् १२

स्त्रीपुंगर्भहेतुः

तद्यदा सन्निपतितयोर्यत्र पुरुषः पूर्वमर्थं नन्दयति जघन्यं स्त्री तत्र पुमानिहाङ्गप्रत्यङ्गैः सदृशो जायते । यत्र तु स्त्री प्रथममर्थं साधयति जघन्यं पुरुषः तत्र स्त्री वाङ्गप्रत्यङ्गैस्सदृशी जायते १३

गर्भस्य स्रुतौ विकारे च हेतुः

अथ स्त्रीपुरुषावृतुकाले रूक्षाणि वातलान्नयन्नानि सेवेते वेगांश्च धारयतः तयोर्गर्भः शोणितादिषु वातसंदूषितेषु निःसृतो भवति गद्गदबाधिर्यमिन्मिणत्वमन्येषां वातपित्तविकाराणामन्यतमं प्राप्नोति । एवमेव पित्तश्लेष्मलानृतुकाले मातापित्रोः सेवमानयोः पित्तश्लेष्मविदूषितो गर्भः सम्भवति १४

चतुर्दशकायाः

अथ खलु गर्भशरीरं चतुर्दशेन्द्रियकायाः समनुप्रविशन्ति । विधृताश्चानुपलभ्यमानाश्च सप्त दिव्याः सप्त मानुषाः १५

दिव्यकायाः

तत्र दिव्याः ब्रह्मदेववरुणगन्धर्वपिशाचासुरमहाराजकाया भवन्ति । तान् व्याख्यास्यामः तत्र यः सत्यार्जवानृशंसक्षमादमध्यानसम्पन्नो-

ऽध्यात्मतत्त्वदर्शी भवति तं ब्रह्मकायमिति विद्यात् १६
यस्तायशीस्तांपादानयधत्रैयवान् मुदितस्तं देवकायमिति विद्यात् १७
यो यज्ञनन्दितरागदृष्टिः सलिलप्रियश्चिरस्नायी पिङ्गाक्षः कपिलकेशः संभवति तं वरुणकायमिति विद्यात् १८
यस्तु प्रियनृत्यगीतवादित्रः स्त्रीविहारनित्यः शुचिवस्त्रगन्धमाल्यानु-लेपनरतिर्भवति तं गन्धर्वकायमिति विद्यात् १९
यस्तु प्रियमद्यमांसमत्स्यस्तथा गोमहाशनो बीभत्सो बालानां भीष-यिता निद्राबहुलश्च भवति तं पिशाचकायमिति विद्यात् २०
यस्त्वात्मगुरूणा मानयिता पश्चाद्द्वेषी चण्डः क्रोधनो ज्ञातीनां भेदको भवति तमासुरं कायमिति विद्यात् २१
यस्तु धीरः शूरः महाभोगो महोत्साहो महैश्वर्यश्च भवति तं महाराज-कायमिति विद्यात् २२

मानुषकायाः

अनुरागेण मानुषास्तु प्रत्यात्मदर्शनश्रवणस्पर्शनरसनघ्राणसुखदुः-खमिति तत्प्रविद्यासहिताः केवलाश्चावतिष्ठन्ते कात्स्न्र्येना । तैरन्वि-तो जन्तुर्लिङ्गति निमिषति आकुंचति प्रसारयति वेद्यं वेदयते २३

कायलयः

स यदा भेदं गच्छति तदायमन्ततः जलं जलकायमेव याति वायुर्वायुकायं तेजः तेजःकायं पृथिवी पृथिवीकायं आकाशमा-काशकायमिति । यथाकायमिन्द्रियकायं भजते २४

भवति चात्र

विद्यमाने शरीरे वै धातुर्धातुं नियच्छति
मनो बुद्धिश्च सर्वेषां ब्रह्मणि प्रतितिष्ठति २५
इत्याह भगवानात्रेयः

## इति भेले शारीरे पञ्चमोऽध्यायः

## षष्ठोऽध्यायः

अथातः खुड्डिकां गर्भावक्रान्तिं शारीरं व्याख्यास्याम इति ह स्माह भगवानात्रेयः

### गर्भस्य मातृजत्वादिविचारः

इह खलु भो मातृजश्चायं गर्भः पितृजश्चात्मजश्च सात्म्यजश्च रसजश्च । अस्ति च सत्त्वमौपपादकमित्यात्रेयवचनम् । नेति भरद्वाजः अमातृजश्चायं गर्भः अपितृजश्चानात्मजश्चासात्म्यजश्चारसजश्च । नास्ति च सत्त्वमौपपादकमिति । यदि हि माता पुत्रं जनयेत् भूयिष्ठं हि स्त्री पुत्रकामा मैथुनवर्गमभिसन्धाय पुत्रं जनयेत् स्त्रीकामा च स्त्रियम् १

### अग्निमारुतयोः कर्म

यदा जीवेन सह सूक्ष्मावग्निमारुतौ गर्भं विशतः तदा द्वावेतावङ्गप्रत्यङ्गानि विकुरुतः तौ चेष्टयतः तौ वर्धयतः तावेव यदा शरीराद् व्यवक्रामतः तदा तद्भवति निर्वातो निरूष्मा प्रेतो मृत इति । नेत्याह भरद्वाजः । मृतोऽपि जन्तुः वायुनाध्माप्यते अग्निना शोष्यते । नेत्याह भगवानात्रेयः । सह वा तस्याग्निमारुतौ जीवयतः तयोरपक्रान्तयोर्बाह्याग्निमारुतावाविशत इति २

### एकत्वग्रहोपपत्तिः

यत्पुनराह सति च भूतनानात्वे कथमेकः स्यादिति अत्रोच्यते । यत्रैतन्नानात्वमाश्रितं तदेतदव्यक्तमस्ति पञ्चमहाभूतसंग्रह इति ३

### व्यक्ताव्यक्तविवेचनम्

यत्पुनराह यद्यव्यक्तं सर्वं स्यादविकारः स्यादिति अत्रोच्यते । वातपित्तश्लेष्मकृता रससमुत्था अस्य व्यक्ताः प्रोच्यन्ते विकाराः अव्यक्ते

ह्युक्ते ते व्यक्ताः कथमव्यक्तं स्न्दयन्ति कथं तर्हि शरीरे तद्विक्रियते उन्मादः कथमव्यक्तं न प्रकाशमुपजनयति तथा मनोऽन्तर्हितेषु वि-ज्ञानस्त्रोतस्तु तमसा स्मृतिं नोपजनयतीति ४

तमसा विस्मृतिः

यत्पुनराह यद्ययं परलोकाद् गर्भोऽवक्रामेन्नास्यकिञ्चित्ततादृष्टं स्यादिति अत्रोच्यते । इह तावदयं चिरोत्सृष्टानि विज्ञानानि विविधानि चाश्च-र्यभूतानि न स्मरति किं पुनर्देहान्तराणि भृतानि भावविशेषान्तराणि ५

तत्रश्लोकः

तमसा भावितो यो वै संस्मरेन्न स मानवः
संस्मरेत्पूर्वचरितं सुकृते वेदवद् द्विजः ६
इत्याह भगवानात्रेयः

इति भेले शारीरे षष्ठोऽध्यायः

सप्तमोऽध्यायः

अथातः शरीरसंख्याशारीरं व्याख्यास्याम इति ह स्माह भगवानात्रेयः

षट् त्वचः

इह खलु शरीरे षट् त्वचो भवन्ति । उदकधरा प्रथमासृग्धरा द्वितीया सिध्मकिलास संभवाधिष्ठाना तृतीया दद्रुकुष्ठसम्भवाधिष्ठाना चतुर्थी अलजीविद्रधिसम्भवाधिष्ठाना पञ्चमी षष्ठी तु यस्यां छिन्नायामुत्ताम्यति तिमिरमिवानुप्रविशति दुष्टारुष्काणि चास्य यामाश्रित्य जायन्ते इति १

अस्थिगणना

त्रीणि सषष्टीनि शतान्यस्थ्ना तद्यथा--द्वात्रिंशद्दन्ताः द्वात्रिंशद्दन्तो-

लूखलानि विंशतिर्नखाः षष्टिः पाणिपादाङ्गुल्यस्थीनि विंशतिः पाणिपादशलाकाः चत्वारि पाणिपादशलाकाधिष्ठानानि द्वे पार्ष्ण्योरस्थिनी चत्वारः पादयोः गुल्फाः द्वौ मणिकौ माणिके द्वे हस्तयोः चत्वार्यरत्न्योरस्थीनि द्वे जङ्घयोः द्वे जानुनी द्वे जानुकपालिके द्वावूरुनलकौ द्वावंसौ द्वे अंसफलके द्वावक्षकौ एकं जत्रु द्वे तालुनी द्वे चिबुके द्वे श्रोणिफलके एकं भगास्थि पञ्चचत्वारिंशत् पृष्ठगतान्यस्थीनि पञ्चदश ग्रीवायाम् चतुर्दशोरसि चतुर्विंशतिः पर्शुकाः पार्श्वयोः तावन्ति चैव स्थालकानि तावन्ति चैव स्थालकार्बुदकानि एकं हन्वस्थि द्वे हनुबन्धने एकं नासास्थिहनुकूटललाटम् चत्वारि शीर्षकपालानि २

## प्राणायतनानि

हृदयमेकं चेतनायतनम् । दश प्राणायतनानि तद्यथा -- मूर्धा कण्ठो हृदयं गुदो नाभिर्बस्तिरोजः शुक्लं शोणितं मांसमिति ३

## कोष्ठाङ्गानि

पञ्चदश कोष्ठाङ्गानि । तद्यथा -- नाभिश्च हृदयं च क्लोम च यकृच्च प्लीहा च वृक्को च बस्तिश्च पुरीषाधानं चामाशयश्चोत्तरगुदश्चाधरगुदश्च क्षुद्रान्त्रं च स्थूलान्त्रं च वपावहनं चेति ४

## प्रत्यङ्गानि

षट्पञ्चाशत्प्रत्यङ्गानि तद्यथा--द्वौ गुल्फौ द्वे नितम्बे द्वे जङ्घे द्वे पिण्डके द्वे ऊरुपिण्डके द्वौ स्फिचौ द्वौ वृषणौ एकं शेफः द्वौ शङ्खौ द्वौ वङ्क्षणौ द्वौ कुकुन्दरौ एको बस्तिः शीर्षमेकमुदरमेकम् द्वौ स्तनौ द्वौ बाहू द्वावंसकौ एकं चुबुकं द्वावोष्ठौ द्वे दन्तवेष्टे द्वे सृक्कणी एकं तालु गलशुण्डिका एका द्वौ कर्णौ द्वे कर्णशष्कुलिके द्वौ गण्डौ द्वे अक्षिकूटे चत्वार्यक्षिवर्त्मानि द्वे अक्षिणी इति ५

## अञ्जलिमेयद्रव्याणि

शरीरद्रव्याणि--दशोदकस्याञ्जलयः शरीरे प्रच्यवमानं पुरीषमनुबध्नात्यतियोगे नवाञ्जलयः पूर्वस्याहारपरिणामधातोर्यन्तं रस इत्याचक्षते कुशलाः अष्टौ शोणितस्य सप्त पुरीषस्य चत्वारो मूत्रस्य द्वौ मेदसः एको मज्ज्ञः मस्तिष्कस्याञ्जलिः शुक्लस्य चेति ६

## जीवगतिः

अथात्र प्रश्नो भवति कथमयं जीवो देहाद्देहान्तरमुपक्रमत इति अत्रोवाच भगवानात्रेयः । जलूकाया इवास्य केचिद्गतिं ब्रुवते । तन्न युक्तम् । इह व्यक्त्यन्तामूर्तं युगपत्स्यादेवापरेऽप्येवमिच्छन्ति । सर्वथापि मुमुक्षोरस्यायमन्तरात्मा परमुपक्रमत इति सर्वथाप्यस्मिन् परित्यक्ते परिचये तावदसंप्राप्तंतरा स्यात् । अवस्थानत्वाच्चेत्तदिष्टं कर्मणोप्येवं भवति वैय्यर्थ्यमपि तु खलु प्रतिश्रुत्यापहितः परत्र गमनं तस्य विद्यात् । अथवा यथादित्यस्य हृदये भूमौ रश्मयः प्रतितिष्ठन्ते । विलम्बितावेवमतस्य तत्र गमनमनुपश्येदिति ७

## पुरुषेऽध्यात्मदेवताः

अथ खलु पुरुषे षोडशाध्यात्मदेवता भवन्ति । तद्यथा--अग्निश्च पृथिवी चापश्चाकाशश्च वायुश्च विद्युच्च पर्जन्यश्च इन्द्रश्च । गन्धर्वश्च मृत्युश्चादित्यश्च चन्द्रमाश्च त्वष्टा च विष्णुश्च प्रजापतिश्च ब्रह्मा चेति । ताः कर्मभिर्विद्यादुत्पत्तितश्च परिमाणतश्च विद्यात् । ऊष्मा ह्यत्राग्नेश्च कर्म देहे । घ्राणं च पृथिव्याः स्नेहो रसो ज्ञानं चोदकस्य स्पर्शनं वायोः श्रोत्रं चाकाशस्य रूपादानं पर्जन्यस्य संवेगादानानि विद्युतः बलमिन्द्रस्य कामो गन्धर्वाणां कोपो मृत्योः चक्षुरादित्यस्य प्रसादश्चन्द्रमसः रूपं त्वष्टुः चेष्टा विष्णोः व्यवायः प्रजापतेः बुद्धिर्ब्रह्मण इति ८

तत्र श्लोकः

विशुद्धनेत्रास्तपसो मुनयः शान्तकल्मषाः
जगतश्चोपपन्नांश्च सर्वान्पश्यन्ति मानवान् ६
इत्याह भगवानात्रेयः

इति भेले शारीरे सप्तमोऽध्यायः

## अष्टमोऽध्यायः

अथातो जातिसूत्रीयं शारीरं व्याख्यास्याम इति ह स्माह भगवानात्रेयः

### अवन्ध्या वन्ध्याश्च

इह खलु भोः याः स्त्रियः पथ्यलघुभोजिन्योऽनुदावर्तनशीला अप्रदुष्टा यथागर्भाशयाः सुविशुद्धस्रोतसो भवन्ति ता आचक्षते अवन्ध्याः इति कुशलाः । ता इष्टरूपं मेधावि चापत्यं जनयन्ति विपर्यये विपर्ययः १

### बीजानुरूपो गर्भः

ऋतौ च गर्भोऽवितिष्ठते । तद्यथा--सुकृष्टक्षेत्रे बीजं प्रक्षिप्तं तत्र व्रीहिः व्रीहित्वाय कल्पते यवो यवत्वाय एवमेवेन्द्रियमृतुकाले विसृष्टमदुष्टायां योनौ गर्भाशयमुपगच्छति । तद्यथा आवर्तगृहीताः प्रतीपं प्रतिधावन्ति तद्वत् शुक्लशोणितं गर्भाशये आसिक्तं क्षीरमिव । तच्चानेककनकमिवौदुम्बरेण निषिक्तमेकत्वमापन्नमृद्धिं लभते २

### गर्भस्येप्सितवर्णादिसम्पादनम्

सा चेदेवमाकाङ्क्षेतौद्वाहिके शिवावदातपुत्रं जनयेयमिति यवानां मन्थं सर्पिस्संयुक्तं सप्तरात्रमनुपहतं भुञ्जीत । ततो दौहृदिनी श्वेताया गोः सरूपवत्सायाः पयसि पाचयित्वा तदेवाश्नीयात् । शुक्ले च वास-

सी परिदध्यात् । सर्वश्वेतं चास्याः संस्कृतं विमानं कारयेत् । वृषभमश्वं वास्या दर्शयेत् । एवमवदातं पुत्रं जनयेत् । नेत्याह शौनकः । पैङ्गल्यं वा ततोऽप्यत्रेति । आत्रेय उवाच किं स्यादाबाधकम् पिङ्गलावयवया आयुष्मन्तो नीरोगाश्च भवन्तीति ३

सा चेदेवमाशासीत श्यामं लोहिताक्षं पुत्रं जनयेयमिति एषामेव यवानां मन्थं कारयेत् लोहितकुक्कुटरक्तेन सप्तरात्रं रक्तशालीनामोदनमनुपहतं भुञ्जीत । दौहृदे सा ताम्रेण च वाससा परिदध्यात् । ताम्रे चास्याः शयनासने दद्याद्रक्तवृषमश्वं वास्या दर्शयेत् । एवं श्यामं लोहिताक्षं पुत्रं जनयति ४

गर्भपातः गर्भशोषश्च

या वै द्वितीयमासि पुष्पं पश्येन्न वास्या गर्भस्तिष्ठतीति विद्यादजात सारा हि तदा गर्भवत्यो भवन्ति । यस्यास्तु खलु योनिः जातसारे पुष्पमास्रवति तस्याः पतति वाप्यतिकालं वावतिष्ठते गर्भः परिशुष्कगात्र इति ५

गर्भिण्याश्चतुर्थमासात् प्रभृत्युपचारः

चतुर्थे खलु मासे प्रतिविहिते क्षीरे नवनीतं प्राश्नीयात् । पञ्चमे क्षीरयवागूः क्षीरसर्पिः सप्तमे दध्युदश्वित् अष्टमे क्षीरसर्पिः नवमे तु खलु मासे प्रतिविहिते मधुरौषधसिद्धेन तैलेनानुवासः ६

गर्भिण्युपचारानुसरणफलम्

एवं ह्यस्याः प्रतिमासं वर्तमानायाः कुक्षिकटीपार्श्वपृष्ठं मृदूभवति जीर्णपुरीषं चाधः स्रवेत्सुखं च प्रजायते ७

सप्तमे तु खलु मासे गर्भप्रपीडिता वातपित्तश्लेष्माण उरः प्राप्य सविदाहं कण्डूं जनयन्ति । तेन किक्किसानि जायन्ते स्त्रीणाम् । त्रिफलाचूर्णं शशरुधिरेण पिष्ट्वा तेनास्याः तान्यालेपयेत् ८

## सूतिकागारविधिः

अष्टमे तु खलु मासे प्रतिविहिते सति सूतिकागारं सम्यक् प्राग्द्वार-मुदग्द्वारं वा कारयेत् तिन्दुकपलाशाश्वत्थैः ९

## अग्रसंग्रहणीयानि

अथात्र पूर्वसंकल्पिताः स्यु द्वौ खलु बिल्वमयौ पर्यङ्कौ शूर्पौ च द्वौ तण्डुलमुसलौ गण्डोपधानं यवागूः सर्पिश्च तैलं च सर्षपाश्चेति १०

## आसन्नप्रसवोपचारादि

अथैनां प्रजनयिष्यतीति यवागूं पाययेत् । अनागतगर्भवेदनां चैना-मवहननं च कारयेत् । सा यदि जानीयादवभ्रष्टो मे कुक्षिः प्रविमुक्तो मे हृद्गर्भः प्रसृता मे योनिरिति अथैनामुपकारिकल्पितनखाश्चतस्र उपजीविकाः प्रतिदिनमुपतिष्ठेयुः । शनैः पूर्वं प्रवाहेत पश्चाद्बलव-त्तरमिति । न चाप्यनागतवेगा वा बालिशतया अनागतवेगा हि दुःखायात्मानं प्रयच्छति सह पुत्रेण ११

## अपरासङ्गे चिकित्सा

तस्याश्चेत्प्रजाताया अपरा न प्रयद्यते तदैनां रक्तशालीनामक्षमात्रं कल्कमम्लेन मूत्रेण वा पाययेत् । एतेनैव कल्पेन दन्तीद्रवन्ती-वृश्चिकालीपुनर्नवावनशीर्षकं कारयेत् । तथोमाकालसर्पपुराण-मालानामन्यतमेन धूपयेद् । सा चेदनेन विधिना न प्रवर्तते अथैनां तीक्ष्णफलतैलेनानुवासयेत् १२

इति भेले शारीरेऽष्टमोऽध्यायः

इति भेलसंहितायां शारीरस्थानं समाप्तम्

## इन्द्रियस्थानम्

## प्रथमोऽध्यायः

--- द्वे वा जात एव विनश्यति

### परिच्छिन्नमासमात्रजीविशिशुलक्षणम्

ह्रस्वैकपक्षो विततो यस्तु गर्भस्तु सुस्वरः
मासमेकं तु जीवित्वा विनाशायोपपद्यते १
पिण्डीशिरा दीर्घहनुरनल्पे संहते भ्रुवौ
द्वितीये मासि संप्राप्ते म्रियते गर्भ ईदृशः २
जातमात्रस्य गर्भस्य व्यञ्जनं यत्र दृश्यते
तृतीये मासि संप्राप्ते म्रियते गर्भ ईदृशः ३
त्रिकेकरो घटशिरा यस्तु गर्भस्तु सुस्वरः
चतुर्थे मासि संप्राप्ते विनाशमुपगच्छति ४

### अल्पायुष्ट्वद्योतकारिष्टम्

यस्य षोडशवर्षस्य व्यञ्जनं तूपजायते
शीघ्रं च पञ्चधातुत्वादल्पायुरिह दृश्यते ५

### दीर्घायुष्ट्वद्योतकम्

यस्य विंशतिवर्षस्य व्यञ्जनं तूपजायते
स दीर्घमायुराप्नोति पुरुषो नात्र संशयः ६

### शरीरापचयाद्यरिष्टानि

शरीरापचयोऽबुद्धिरपथ्यानि बलं तथा
बालस्य यस्य दृश्यन्ते तं गतायुषमादिशेत् ७
यस्य जातस्य जायेते गुल्मकास्तुनकौ तथा
अष्टविंशे गते वर्षे सर्वं तं हन्ति मानवम् ८
पृष्ठे चोरसि चावर्तस्सव्यथो यस्तु दृश्यते

चत्वारिंशे गते वर्षे मरणायोपकल्पते ९
आवर्तो यश्च पृष्ठे तु सन्नतस्त्रिषु दृश्यते
फलमस्य तु विज्ञेयं स्थापनं न प्रसूयते १०
स्थूलास्थूलाङ्गुली पाणी नखा यस्यापि लोहिताः
कल्याणदेशप्रत्यङ्गः पञ्चाशद्वर्ष एव च ११
व्यूढोरस्को दीर्घभुजः स्थूलजानुश्च यो भवेत्
दीर्घाङ्गुलिर्दीर्घनखः षष्टिं वर्षाणि जीवति १२
उत्पीडितस्वरं वापि तुङ्गनासकचोन्मुखम्
ऊरुकं भद्रसम्पन्नं विद्यात्सप्ततिकं नरः १३
भद्रं पुरश्च पश्चाच्च ऋजुकं प्रियवादिनम्
अशीतिकं नरं विद्यात्कृष्णात्रेयवचो यथा १४

शतायुर्लक्षणम्

ललाटं नासिका कर्णौ यस्यैतानि पृथक् पृथक्
षडङ्गुलप्रमाणानि स जीवति शतं समाः १५
यस्याकुञ्चितमेव स्याज्जानुभ्यां समितं शिरः
ऊर्ध्वजानुगतौ कर्णौ पौत्रं पश्यत्ययं नरः १६
महान्तौ विपुलौ कर्णौ भवेतां रोमशौ तथा
स्निग्धौ बहुलकेशश्च स चेह शतमृच्छति १७

दीर्घायुःप्राप्त्युपायाः

धर्मेण सत्यवाक्येन गुरुशुश्रूषणेन च
रसायनोपयोगाच्च स दीर्घमनुजीवति १८
इत्याह भगवानात्रेयः

इति भेले इन्द्रिये प्रथमोऽध्यायः

द्वितीयोऽध्यायः

अथातः स्वस्त्ययनमिन्द्रियं व्याख्यास्याम इति ह स्माह भगवानात्रेयः

स्वास्थ्यसूचकलक्षणानि

मुखं नेत्रे शरीरं पाणिपादं तथैव च
सरक्तं दृश्यते यस्य स वै स्वस्थौ भविष्यति १
यस्य गोमयचूर्णाभं नराणां मूर्ध्नि दृश्यते
शिरसि स्निह्यमाने च कण्डूस्संजायते दृढम् २
यस्य केशाः प्रमुच्यन्ते शीर्णमूलाः शरीरिणः
यस्यैतानि तु रूपाणि स वै स्वस्थो भविष्यति ३
नास्य दन्ताः प्रहृष्यन्ति मुखं च न विलुप्यति
नाबद्धं भाषते चापि स वै स्वस्थो भविष्यति ४
न विक्षिपति गात्राणि स्वरोऽस्य न विवर्तते
वस्त्रेण गूहते गुह्यं स वै स्वस्थो भविष्यति ५
न भवत्युन्नतो नाभिर्यथावस्थोऽभितिष्ठति
सुखं श्वसिति रात्रौ च स वै स्वस्थो भविष्यति ६
न नखाः कर्कशाभासा न श्यावा न च निष्प्रभाः
प्रसन्नास्सुप्रभाश्चैव स वै स्वस्थो भविष्यति ७
आतपाधिष्ठितो यस्तु न ----- प्रकाशचे
न च लोहितसंयु-----
इत्याह भगवानात्रेयः

इति भेले इन्द्रिये द्वितीयोऽध्यायः

# तृतीयोऽध्यायः

## मुमूर्षुलक्षणानि

--- धितस्वप्ने तां रात्रिं नातिवर्तते
इयं मे शिष्टशिबिका वैडूर्यमणियन्त्रिता
एवं प्रलापयेच्चार्तो गतायुरिति तं विदुः १
प्रज्वलत्यपि यो दीपे तम एवाभिपश्यति
शब्दान्विप्रतिबुध्येत चापूर्वानिव नास्ति सः २
आवाक्शिराः प्रलम्बामि नाम मा परिवर्तय
मनुजः प्रलपन्नेवं सप्ताहं नातिवर्तते ३
मर्माणि दलितानीव योऽभीक्ष्णं चातिसार्यते
प्रवाहमाणो दुर्गन्धि कुणपं पूतिकं तथा ४
तच्च लोहितगन्धं वाप्यथवा मत्स्यगन्धिकम्
कृष्णं नीलं विवर्णं वा मुमूर्षुश्च स होच्यते ५
मधुमेही वसामेही सर्पिर्मेही च यो नरः
बहुमेही च यो जन्तुः स वै प्रोक्तः परासुकः ६
प्रमेहेत यदा जन्तुर्बिन्दुं बिन्दुं सवेदनम्
वायुना भिन्नबस्तिः स्याद् दुर्लभं तस्य जीवितम् ७
क्रिमयो बहवो यस्य निस्सरन्ति शरीरिणः
आतुरस्य शयानस्य नौषधं तस्य सिध्यति ८
इत्येतानि भिषक् दृष्ट्वा लक्षणानि मुमूर्षताम्
न चिकित्सां प्रयुञ्जीत यथामार्गं चिकीर्षकः ९
इत्याह भगवानात्रेयः

इति भेले इन्द्रिये तृतीयोऽध्यायः

## चतुर्थोऽध्यायः

अथातः सद्योमरणीयमिन्द्रियं व्याख्यास्याम इति ह स्माह भगवानात्रेयः

### सद्योमरणलक्षणम्

यदातुरस्य हृदयं वायुः संगृह्य तिष्ठति
धमनीस्संपरीपीड्य सद्यो जह्यात्स जीवितम् १
आतुरस्य यदा वायुः शरीरमनुपद्यते
उत्ताने नेत्रनिष्यन्दः सद्यो जह्यात्स जीवितम् २
यस्य कोष्ठगतो वायुरुपावृत्तश्शरीरिणः
क्षीणलोहितमांसस्य सद्यो जह्यात्स जीवितम् ३
यस्यातुरस्येह वाताद्वाताष्ठीला विवर्धते
न संसरति चान्यत्र सद्यः प्राणान् जहाति सः ४
यस्योभे पिण्डके स्तब्धे नासा जिह्मा च लक्ष्यते
व्यावृत्ते चाक्षिणी यस्य सद्यः प्राणान् जहाति सः ५
आमाशयसमुत्थाना यस्यैव परिकर्तिका
तृष्णा च तीव्ररागश्च सद्यः प्राणान् जहाति सः ६
पक्वाशयसमुत्थाना यस्य स्यात्परिकर्तिका
तृष्णा गलग्रहश्चोग्रः सद्यो जह्यात्स जीवितम् ७
शोणितं रोमकूपेभ्यो यस्य क्षरति देहिनः
अतीव मुखतो भेदि सद्यो जह्यात्स जीवितम् ८
हृदयस्य तु संघातं परिक्षीणस्य देहिनः
अत्यर्थं पीडयेच्छूलं सद्यः प्राणान् जहाति सः ९
यस्य क्षीणशरीरस्य संज्ञां हरति मारुतः
व्याहन्ति च महास्त्रोतः सद्यः प्राणान् जहाति सः १०
हृदयस्य तु संघातं परिक्षीणस्य देहिनः

एतैरेवंविधैर्लिङ्गैरन्यैश्चापि तथाविधैः ११
प्रकृतेर्विकृतिं प्राप्तं परीक्षेतातुरं भिषक्
इत्याह भगवानात्रेयः

इति भेले इन्द्रिये चतुर्थोऽध्यायः

पञ्चमोऽध्यायः

अथातः यस्य श्यावीयं व्याख्यास्याम इति ह स्माह भगवानात्रेयः

मुमूर्षुलक्षणानि

यस्य श्यावे उभे नेत्रे दृश्येते हरिते तथा
उत्पन्नश्च शिरोरोगः फलितं तस्य जीवितम् १
हरिताश्च सिरा यस्य रोमकूपाश्च लोहिताः
भुङ्क्ते वान्नानि साम्लानि तत्रैव स विनश्यति २
यस्योर्ध्ववातः कोपेन जन्तोरामाशयं गतः
हृदयं परिगृह्णाति परेतं तस्य जीवितम् ३
गात्रे च पाणिपादे च यस्य शुष्यति शोणितम्
मुहुर्मुहुर्नृत्यति च परेतं तस्य जीवितम् ४
वृषणौ पाणिपादौ च यस्य शुष्कं मुखं तथा
छविश्च शोषमायाति परेतं तस्य जीवितम् ५
हनू हस्तौ च पादौ च वृषणौ लिङ्गमेव च
दृश्यते देहिनो यस्य परेतं तस्य जीवितम् ६
हृदयं दह्यते यस्य मुमूर्षु तं समादिशेत्
आतुरस्तु स यातो वै परेतं तस्यजीवितम् ७
अपस्मारः क्षयः कुष्ठं रक्तपित्तमथोदरम्
गुल्मश्च मधुमेहश्च दीर्घरोगा भवन्ति ते ८
बलमांसक्षयो यस्य देहिनो दीर्घरोगिणः

दृश्येत स्वरहानिश्च परेतं तस्य जीवितम् ९
हृदयं दह्यते यस्य कोष्ठे शूलं स्वरक्षयः
अभीक्ष्णं दह्यते चापि परेतं तस्य जीवितम् १०
त्रासाभितापा जन्तूनां कोष्ठे शूलाश्चरन्ति च
हिक्काच्छर्दिपरीतश्च परेतं तस्य जीवितम् ११
वापितं ज्वलितं मर्त्यः सलिलं हि हुताशनम्
भास्करं मन्यते सोमं दुर्लभं तस्य जीवितम् १२
यश्चापि विमले सूर्ये मेघान् पश्यति सर्वशः
दुर्दिनं सुदिनं चापि परेतं तस्य जीवितम् १३
यं रसा नावतिष्ठन्ते भेषजं चेन्द्रियाणि तु
यस्य वा विपरीतानि न च जीवति तादृशः १४
वानस्पत्यफलं मूलं रोगस्पृष्टस्य यस्य वै
भैषज्यार्थं न दृश्येत न च जीवति तादृशः १५
इत्येतानि भिषग् दृष्ट्वा लक्षणानि मुमूर्षताम्
न चिकित्सां प्रयुञ्जीत यशोमार्गप्रतीक्षया १६
इत्याह भगवानात्रेयः

इति भेले इन्द्रिये पञ्चमोऽध्यायः

## षष्ठोऽध्यायः

अथातः पूर्वरूपीयं व्याख्यास्याम इति ह स्माह भगवानात्रेयः

### अचिकित्स्याः

अन्तर्लोहितकायस्तु बहिः पाण्डुः प्रकाशते
पूर्वरूपं तदाचष्टे मानवस्य मुमूर्षतः १
बहिर्लोहितकायस्तु पाण्डुरन्तः प्रकाशते

पूर्वरूपमनुप्राप्तः स मृत्योरुच्यते नरः २
अन्तर्ग्लानो बहिः पीनो बहिराध्मात एव च
यश्चात्यन्तसमाध्मातः सर्वेऽप्येते परासुकाः ३
अभीक्ष्णं ज्वर्यते यस्तु निवातमभिनन्दति
अनुषक्तप्रतिश्यायः क्षिप्रं श्वासेन हन्यते ४
निनादी वा प्रलापी वा हसत्यत्यर्थमेव च
उन्मादेन कृशो जन्तुः पञ्चत्वमुपगच्छति ५
घनं सशूलं यो वेद सदाहं हृदयं नरः
हृद्रोगेण कृशो जन्तुर्विनाशमुपगच्छति ६
प्रस्विद्यते च कण्डूमान् यो विरुद्धं च सेवते
अविरेचनशीलश्च कुष्ठेन स विनश्यति ७
सुकुमारश्च यो जन्तुः स्नेहं मांसं च सेवते
दिवा स्वपिति चाभीक्ष्णं स प्रमेही विनश्यति ८
परिशूनश्च यो जन्तुः स्वेदे च परुषच्छविः
भिन्नं यश्चोपविशति सोऽतिसारेण हन्यते ९
यस्याग्निश्च बलं चैव नाल्पं भवति देहिनः
क्षीणलोहितमांसस्य यथा प्रेतस्तथैव सः १०
सद्यो रक्तं शिरो यस्य पीतकं वा प्रदृश्यते
कपिलं प्लुष्टकेशं वा यथा प्रेतस्तथैव सः ११
यस्य नेत्रे ललाटं च मुखं नासां भ्रुवौ तथा
जिह्मानि कुरुते वायुर्यथा प्रेतस्तथैव सः १२
श्यावा कण्टकिनी जिह्वा यस्य शुष्का प्रदृश्यते
श्यावे नेत्रे नखाश्चापि यथा प्रेतस्तथैव सः १३
यस्य निर्भिद्यते कण्ठः ताम्यत्युच्चैश्शरीरिणः
बहिरायामभाजस्तं प्रत्याचक्षीत पण्डितः १४

यस्योर्ध्वकाये बलवान् नवो रोगस्तु दुष्क्रियः
पूर्वरूपं तथा वाच्यं मानवस्य मरिष्यतः १५
यस्य चुच्छुन्दरीगन्धः पुरुषस्य भवत्यथ
सौवर्णानपि वृक्षांश्च यो वेद स विनश्यति १६
इत्येभिरीदृशैश्चान्यैर्विकारैर्वर्णितं नरः
नोपक्रमेत मेधावी य इच्छेदात्मनः सुखम् १७
इत्याह भगवानात्रेयः

इति भेले इन्द्रिये षष्ठोऽध्यायः

सप्तमोऽध्यायः

अथातः इन्द्रियानीकमिन्द्रियं व्याख्यास्याम इति ह स्माह भगवानात्रेयः

इन्द्रियादिपरीक्षा

इन्द्रियाणि यथा जन्तोः परीक्षेत विशेषतः
आयुःप्रमाणं जिज्ञासुर्भिषक् तन्मे निबोधत १
अन्नपानात्परीक्षेत दर्शनाद्यैश्च तत्त्वतः
अर्थादिविहितं ज्ञानमिन्द्रियाणामतीन्द्रियम् २
स्वस्थेभ्यो विकृतं यस्य ज्ञानमिन्द्रियसंश्रयम्
अलक्षितं निमित्तेन लक्षणं मरणे हि तत् ३
इत्युक्तं लक्षणं सम्यगिन्द्रियेष्वशुभोदयम्
तदेव तु पुनर्भूयो विस्तरेण निबोध मे ४
घनीभूतमिवाकाशं पश्यंस्तमिव मेदिनीम्
विगीतं ह्युभयं ह्येतत्पश्यन्मरणमृच्छति ५
यस्य दर्शनमायाति मारुतोऽम्बरगोचरः

अग्निर्नायाति वा दीप्तः तस्यापि क्षयमादिशेत्  ६
जलेऽपि निर्मले जालमजालं मनुते नरः
स्थिरे गच्छति वा दृष्ट्वा जीवितात्परिहीयते  ७
जाग्रत्पश्यति यः प्रेतान् रक्षांसि विविधानि च
अन्यद्वाप्यद्भुतं किंचिन्न स जीवति तादृशः  ८
योऽग्निं प्रकृतिवर्णस्थं नीलं पश्यति निष्प्रभम्
कृष्णं वा यदि वा शुक्लं न स जीवति मानवः  ९
मरीचीनसतो मेघे मेघान्वाप्यमलाम्बरे
विद्युतो वा विना मेघान्न स जीवति मानवः  १०
मृण्मयीमिव वा पात्रीं कृष्णां वापि पुरीषिताम्
आदित्यमर्धचन्द्रं वा क्षिप्रं दृष्ट्वा विनश्यति  ११
नक्तं सूर्यमहश्चन्द्रमवह्नौ धूममुत्थितम्
अग्निं वा निष्प्रभं दृष्ट्वा रात्रौ मरणमादिशेत्  १२
प्रभावतः प्रभां हीनां निष्प्रभान्वा प्रभावतः
नरान् विलिङ्गान् पश्यन्ति भावान् भावजिघांसवः  १३
व्याकृतीनि च वर्णानि विसंख्योपचितानि च
निमित्तानि च पश्यन्ति रूपाण्यायुःपरिक्षयात्  १४
यस्तु पश्यत्यदृश्यं वा दृश्यं यस्तु न पश्यति
तावुभौ गच्छतः क्षिप्रं यमक्षयमसंशयम्  १५
अशब्दस्य च यः श्रोता शब्द यश्च न विन्दति
द्वावप्येतौ यथा प्रेतौ तथा ज्ञेयौ विजानता  १६
विपर्ययेण यो विद्याद् गन्धानां चैव नाम तम्
न वा तत्सर्वतो विद्याद्विद्यात्तं वै गतायुषम्  १७
यो रसं न विजानाति विपक्वं वा च तत्त्वतः
अपक्वं दृश्यते पक्वं तमाहुः कुशला नराः  १८

उष्णान् शीतान् खरान् श्लक्ष्णान् मृदूनपि च दारुणान्
स्पृश्यान् स्पृष्ट्वा ततोऽन्यच्च मुमूर्षुस्तेषु मन्यते १९
अन्तरेण तपस्तीव्रं योगं वा विधिपूर्वकम्
इन्द्रियैरधिकं पश्यन् पञ्चत्वमुपपद्यते २०
इन्द्रियाणामृते दृष्टेरिन्द्रियार्थान्नदोषजान्
नरः पश्यति यः कश्चिदिन्द्रियैर्न स जीवति २१
स्वस्थाः प्रज्ञाविपर्यासैरिन्द्रियार्थेषु वैकृतम्
पश्यन्ति ये तु बहुशः तेषां मरणमादिशेत् २२
एतदेव च विज्ञानं यस्सम्यगनुपश्यति
मरणं जीवितं चैव स भिषग् ज्ञातुमर्हति २३
इत्याह भगवानात्रेयः

इति भेले इन्द्रिये सप्तमोऽध्यायः

## अष्टमोऽध्यायः

अथातो दूताध्यायं व्याख्यास्याम इति ह स्माह भगवानात्रेयः

### दूतादिनिमित्तरिष्टानि

तृणान्नखान्वा छिन्दन् वै भिषजं परिपृच्छति
आतुरस्य यदा दूतः प्रत्याख्येयस्तथाविधः १
विप्लुतं भाषमाणश्च भिषजं परिपृच्छति
आतुरस्य यदा दूतः प्रत्याख्येयस्तथाविधः २
भिनत्ति काष्ठं काष्ठेन लोष्टं लोष्ठेन वाप्यधः
आतुरस्य यदा दूतः प्रत्याख्येयस्तथाविधः ३
स्पृशन्नङ्गानि बालांश्च भिषजं परिपृच्छति
आतुरस्य यदा दूतः प्रत्याख्येयस्तथाविधः ४
पिधाय पाणिना नाभिं भिषजं परिपृच्छति

आतुरस्य यदा दूतः प्रत्याख्येयस्तथाविधः ५
कपालिकां शर्करां वा भिनत्त्यङ्गारिकामपि
आतुरस्य यदा दूतः प्रत्याख्येयस्तथाविधः ६
आस्ते भूमौ परिश्रान्तो गृह्णात्यङ्गमथ भ्रमन्
आतुरस्य यदा दूतः प्रत्याख्येयस्तथाविधः ७
नष्टं मृतमतिक्रान्तं नानुशोचन्ति पण्डिताः
इत्यातुरस्य हि यदा वदेद्दूतो न सोऽस्ति वै ८
करं करेण गृह्णाति पाणिना ताडयेत्करम्
आतुरस्य यदा दूतः प्रत्याख्येयस्तथाविधः ९
खादेदोष्ठौ च जिह्वां च नखान् दन्तैश्च कल्पयेत्
आतुरस्य यदा दूतः प्रत्याख्येयस्तथाविधः १०
आतुरस्य यदा गेहे वैद्ये वै पर्युपस्थिते
छिद्यते भिद्यते चैव प्रत्याख्येयस्तथाविधः ११
परावर्त्य घटं पूर्णं ब्राह्मणं परिपृच्छति
आतुरस्य यदा दूतः प्रत्याख्येयस्तथाविधः १२
गृध्रः सुगालः काकश्चाप्युलूको वायसस्तथा
नदेयुर्दक्षिणे पार्श्वे रोगिणो यस्य नास्ति सः १३
कषायवस्त्रो मुण्डो वा जटिलो वाथ नग्नकः
चर्मभिर्वा परिवृतो महानस्येव शाटिकः १४
तैलाभ्यक्तश्छिन्ननासो वाग्मी चोन्मत्त एव वा
भग्नौष्ठः खरवाटो वा न दूतः सम्प्रशस्यते १५
इति दूतसमाचारो व्याधितानां प्रकीर्तितः
य एवं वेद निपुणं सिद्धिकामः स वै भिषक् १६
इत्याह भगवानात्रेयः

इति भेले इन्द्रिये अष्टमोऽध्यायः

## नवमोऽध्यायः

अथातो गोमयचूर्णं व्याख्यास्याम इति ह स्माह भगवानात्रेयः

### गोमयचूर्णाभादिप्रयुक्तरिष्टानि

पूर्णं शिरसि यस्यैव शुष्कगोमयसन्निभम्
स्नेहिनो दृश्यते जन्तोर्मासाद्देहं जहाति सः १
कृशस्य कफरोगेण यस्य श्लेष्मपरिक्षयः
कर्णौ रक्तौ मुखं चैव द्वौ मासौ नातिवर्तते २
यस्य लोहितकाभासमम्बु तालुनि दृश्यते
क्षीणलोहितमांसस्य स मासं नातिवर्तते ३
अरुन्धतीं न पश्येत्तु स्थितां सप्तर्षिसंसदि
स मासादष्टमान्मर्त्यः क्षिप्रं प्राणैर्विमुच्यते ४
अणुकाभिश्च कृष्णाभिरास्यं जिह्वा च तालुके
सर्वतस्समनुच्छिन्नं न स जीवति तादृशः ५
शीर्षाभितापिनो यस्य श्लेष्मरोगवतस्तथा
हिक्का विनिष्यन्दते वै नायमस्तीति निर्दिशेत्
यस्य लोमानि केशाश्च प्लुष्यन्तीव शरीरिणः
संहृष्टानीव वा देही न स जीवति तादृशः ७
यस्य कालान्तरे दन्ता दृश्यन्ते रक्तसन्निभाः
निष्प्रभाश्चानुलिप्ता वा न स जीवति तादृशः ८
क्षारेण विधृतं गात्रं दृश्यते यस्य देहिनः
सममुष्णे च शीते न च स जीवति तादृशः ९
गात्रेषु स्वरवर्णेषु यस्य वारिलवप्लवः
अनभ्यक्तेषु गात्रेषु न स जीवति तादृशः १०
शूलमङ्गे भवेद्यस्य स्फुटितं रक्तमास्रवेत्

अधो गोलकसंकाशं परेतं तस्य जीवितम्  ११
आपाण्डु मधुमेहे तु यश्च मेहति मानवः
अभ्यन्तरेण पञ्चाहात्स पञ्चत्वं हि गच्छति  १२
अरतिश्चाविपाकश्च कार्श्यदौर्बल्यमेव च
यस्य संदृश्यते जन्तोर्न स जीवति तादृशः  १३
यस्तु दीनमनाथो वा बलेन परिहीयते
भिद्यामारोगमाप्नोति यथा प्रेतस्तथैव सः  १४
अनुवृत्तौ यथा जन्तुः पित्तेन परिमूर्च्छितः
संमूढवाक्यो भवति यथा प्रेतस्तथैव सः  १५
यस्त्वासनेऽथ शयने रतिं न लभते नरः
स शीघ्रं कुरुते कालं यश्च साश्रूणि खादति  १६
आरुह्य वानरं यस्तु संकल्पं नावबुध्यते
तमाहुः परलोकाय स्वप्ने तु कुशला नराः  १७
परिसंवत्सराद्यस्य ज्वरो नापैति देहिनः
उष्णो वा यदि वा शीतो यथा प्रेतस्तथैव सः  १८
यस्य जातप्रमेहस्य पिटका पाण्डुरा भवेत्
सोपद्रवा शतपदा यथा प्रेतस्तथैव सः  १९
यस्योर्ध्वं क्रमते वायुः श्रोत्रं वाधः प्रवर्तते
सर्वाणि च प्रभिद्यते यथा प्रेतस्तथैव सः  २०
इत्येतैर्लक्षणैर्युक्तं भिषक् दृष्ट्वैव मानवम्
नोपक्रमेत्तथा वीरो धीरो रक्षन्नात्मयशः स्फुटम्  २१
इत्याह भगवानात्रेयः
इति भेले इन्द्रिये नवमोऽध्यायः

## दशमोऽध्यायः

अथातश्छायाध्यायं व्याख्यास्याम इति ह स्माह भगवानात्रेयः

### छायादिरिष्टानि

अनुच्छायाथवा जन्तोर्दृढच्छायाथवा पुनः
विच्छिन्ना यस्य वा छाया न स जीवति तादृशः १
यो विद्युतमिवाकाशे व्यभ्रे पश्यति मानवः
धूमायते शिरश्छाया यस्य नास्तीति तं विदुः २
लाक्षारक्तं यथा वस्त्रमेवं पश्यति यो महीम्
अथवा रक्तमाकाशं रक्तपित्तेन हन्यते ३
यो हृष्टरोमा पुरुषः कासेन श्लेष्मणाचितः
कण्ठश्च शूकानुगतो यस्य नास्तीति तं विदुः ४
यस्य शङ्खाच्च्युतं मांसं श्यावे नेत्रे तथैव च
चूर्णकश्च मुखे जातः परेतं तस्य जीवितम् ५
यस्य हस्ताच्च्युतं मांसं जन्तोर्दृश्येत कुष्ठिनः
अथाविप्रयुक्तस्य न स जीवति मानवः ६
अविपक्वं विपक्वं वा भुक्तं भुक्तं यथा भवेत्
काशश्वासज्वरैः स्पृष्टो नास्ति तस्य चिकित्सितम् ७
हृदयं पूर्वमावाति यस्य स्नातस्य देहिनः
अर्धमासात्परं तस्य जीवितं नातिवर्तते ८
ऊर्ध्वश्वासहतो यस्तु रक्तं प्रच्छर्दयेन्नरः
शूलं वा भिन्नकोष्ठस्य न स जीवति मानवः ९
अन्तर्दाहोऽधिको यस्य शीतार्तिश्चापि बाह्यतः
आकाशं परिपूर्णं वा वेत्ति यो न स जीवति १०
यस्य पक्वावुभावोष्ठौ नीलौ जम्बूफलोपमौ

उच्छूनं यस्य च शिरः परेतं तस्य जीवितम् ११
यस्योच्छूनं भवेन्मध्यमुभावंसौ कृशौ तथा
विरिक्तः पुनराध्माति यथा प्रेतस्तथैव सः १२
एतदिन्द्रियविज्ञानं यस्सम्यगनुपश्यति
स जीवितं च मृत्युं च नृणां विद्याद्भिषग्वरः १३
इत्याह भगवानात्रेयः

इति भेले इन्द्रिये दशमोऽध्यायः

## एकादशोऽध्यायः

अथातः पुष्पीयं व्याख्यास्याम इति ह स्माह भगवानात्रेयः

### पुष्पितादिरिष्टानि

शिरस्यङ्गे रक्तवर्णं योऽनिलं वापि पश्यति
घटिकामेकवर्णं वा स पुष्पित इहोच्यते १
अष्टापदं वा सुकृतं जगतीं यः प्रपश्यति
स दृष्टिपरिहीनत्वात्पुष्पितः प्रोच्यते नरः २
सुप्तश्च संवृते गेहे पश्यत्याकाशमेव यः
रोमन्थयति दन्तैश्च स पुष्पित इहोच्यते ३
दीप्यमानमिवाकाशं पृथिवीं च वनानि च
यो वेत्ति रोमसंहृष्टः पुष्पितः स इहोच्यते ४
अनुलिप्तो यथा देही वाति चेत्कुणपं यथा
सेवन्ते मक्षिकाश्चैव पुष्पितः स इहोच्यते ५
अविज्ञाता नरं नारी स्वप्न एव निवासिनी
दक्षिणां दिशमेहीती यं ब्रूयान्न स जीवति ६
प्रकीर्णकेशो विकरः स्वप्ने यो दक्षिणां दिशम्

प्रतिपद्येत तत्रैव न स जीवति तादृशः ७
कुशैरिव निरूढाङ्गमात्मानं स्वप्न ईक्षते
खं वा सधूमं यो वेत्ति न स जीवति तादृशः ८
यः स्वप्ने वृक्षमारुह्य न रोगी त्रायते गृहे
प्रकीर्णकेशो विकचः योऽग्निमारुह्य रोदिति ९
प्रासादमेकस्थूणं तु स्वप्ने यश्चाधिरोहति
नरो नृत्यति पङ्के वा स पुमान्न च जीवति १०
स्वप्ने प्रासादमारुह्य महान्तं काञ्चनं तथा
यो नृत्तगीतपानान्नी न स जीवति मानवः ११
गजेनोष्ट्रेण वा गच्छन् यः पश्येद्दक्षिणां दिशम्
जीवेत्तु रोगी सप्ताहं नीरोगः शिरदां शतम् १२
याति यो दुर्दिने वापि स्वप्ने वा दक्षिणां दिशम्
प्रतिबुध्येत तत्रैव न स जीवति तादृशः १३
भासैर्बर्हिवराहैश्च श्वभिर्महिषवाजिभिः
समं यो तद्दिवा योने स्वप्ने योगफलं लभेत् १४
यदा गण्डं च खड्गं च स्वप्ने चाश्नंश्च पश्यति
प्रकीर्णकेशमपि च न स जीवति तादृशः १५
यः स्वप्ने पुरुषः कालं पीतं वा वस्त्रमृच्छति
गायन्नचेष्टयन्वापि न स जीवति तादृशः १६
यः स्वप्ने वीतकामोऽपि पीतां पिबति वारुणीम्
चित्रकण्ठगुणो वापि न स जीवति तादृशः १७
आकुलापां नदीं स्वप्ने योऽवगाहेत मानवः
जीवेत्सरोगस्सप्ताहं नीरोगश्शरदां शतम् १८
स्वप्ने स्नातानुलिप्तस्य भ्रंशेद्यस्य तु वर्णकः
गात्रस्य पुरुषस्येह स शस्त्रेण विनश्यति १९

एतदिन्द्रियविज्ञानं यस्सम्यगनुपश्यति
जीवितं चैव मृत्युं च नृणां विद्याद्विचक्षणः  २०
इत्याह भगवानात्रेयः
इत्याह भेले इन्द्रिये एकादशोऽध्यायः

द्वादशोऽध्यायः

अथातोऽवाक्चितीयं व्याख्यास्याम इति ह स्माह भगवानात्रेयः

छायादिरिष्टानि

अवाक्चिता वा जिह्वा वा यस्य छायाल्पिका भवेत्
नेत्रे च विषमे स्यातां परेतं तस्य जीवितम्  १
यदि दीनानि पक्ष्माणि न निमीलन्ति देहिनः
दह्येते नयने वापि परेतं तस्य जीवितम्  २
नमन्त्यौ यस्य दृश्येते भ्रुवौ मूर्धनि वा स्थिते
जीवेत्तु स त्र्यहं रोगी षण्मासान् व्याधिवर्जितः  ३
लुञ्चयमानेषु केशेषु वेदयन्नाति वेदनाम्
निवृत्तसुखदुःखः स्यात्परेतं तस्य जीवितम्  ४
यस्यातुरस्य पिटका व्यङ्गो वा दृश्यते मुखे
अदृष्टपूर्वं प्रथमं परेतं तस्य जीवितम्  ५
शुष्यते नासिकावंशः पृथुत्वं यस्य गच्छति
अंसोऽनिलात् कासवतः परेतं तस्य जीवितम्  ६
अत्युष्णं वातिशीतं वा स्तब्धं वा मृदु वाप्यथ
मन्यते पाणिपादं च परेतं तस्य जीवितम्  ७
योऽवतीर्य नदीं पूर्णां तोये पश्यति जालकम्
गात्रं लिप्तमथाद्भिश्च यस्य नास्तीति तं विदुः  ८
विवर्तयति यः शीर्षमत्यर्थं च नसा नरः

न स्विद्यते ललाटं च नास्ति तस्य चिकित्सितम् ९
ज्वर्यते कासते वापि तथोच्छ्वसिति वै दृढम्
आक्रम्यते ताम्यते च यथा प्रेतस्तथैव सः १०
यस्योदरं समाध्मातं तद्वर्त्म च विभाव्यते
भिन्नं पुरीषं तृष्णा च यथा प्रेतस्तथैव सः ११
अनारतं गृहे यस्य कांस्यं भिद्येत देहिनः
चन्द्रस्तीक्ष्णो मृदुश्चार्को यस्य स्यात्तं विवर्जयेत् १२
अप्रधातुः प्रधातुर्वा स्वस्थो वा यदि वाऽऽतुरः
यश्चन्दनमिवावाति न स जीवति तादृशः १३
यूथिकोत्पन्नगण्डश्च वाति यश्चापि वर्त्मवत्
अभक्तः तमिमं बाल्ये यो वाति न स जीवति १४
द्विषद्भिः कुरुते सख्यं यः प्रियैर्याति विप्रियम्
अकस्मात्कुप्यते यस्तु परेतं तस्य जीवितम् १५
एभिरेवंविधैर्लिङ्गैरन्यैश्चापि यथायथम्
नोपक्रमेत मेधावी भिषगन्वितमातुरम् १६
एतद्भिषगरिष्टानां यो ज्ञानमनुबुध्यते
यथोक्तं वेद वेदायुः स भिषक् शास्त्रकोविदः १७
इत्याह भगवानात्रेयः

इति भेले इन्द्रिये द्वादशोऽध्यायः

इति भेलसंहितायामिन्द्रियस्थानं समाप्तम्

# चिकित्सास्थानम्

## प्रथमोऽध्यायः

अथात एकादशसर्पिष्कं व्याख्यास्याम इति ह स्माह भगवानात्रेयः

### ऐतिहासिकी ज्वरोत्पत्तिः

अकल्पयन्न यज्ञाङ्गं पुरा दक्षस्त्रिशूलिने
तस्मात्प्राणाशयामास यज्ञं दक्षस्य शङ्करः १
तं च नाशयता यज्ञं देव्याः प्रियचिकीर्षया
क्रोधेनोष्णं विनिश्वस्य तान् लोकान् व्यापितो ज्वरः २

### ज्वरप्रभावः

स एष सन्तापयति जगत्स्थावरजङ्गमम्
निधने चापि भूतानां नान्यो हेतुर्विना ज्वरात् ३
यावन्तोऽन्ये समाख्याता व्याधयस्तु शरीरिणाम्
संवत्सरेण ते घ्नन्ति सद्यः प्राणहरो ज्वरः ४
रोगानीकस्य सर्वस्य ज्वरो राजा प्रकीर्तितः
ज्वरयत्येष भूतानि तस्माज्ज्वर इति स्मृतिः ५
शारीरमानसानां च रोगाणां प्रवरो ज्वरः
तस्मात्प्रथमतस्तस्य प्रवक्ष्यामि चिकित्सितम् ६

### ज्वरप्रभेदानुनिर्देशः

उक्तरूपसमुत्थाना ज्वराश्चाष्टौ प्रकीर्तिताः

### शीतोष्णज्वरौ तच्चिकित्सासूत्रं च

शीतश्चोष्मश्च नियतः समासात् द्विविधो ज्वरः ७
शीतस्योष्णां क्रियां कुर्याद्वातश्लेष्मात्मकस्य तु
उष्णस्यैकान्तपित्तस्य शीतां कुर्यात्क्रियां भिषक् ८
वायुरामाशयात्पूर्वमूष्माणं समुदीरयेत्

त्वग्गतो रोम चापन्नः संहर्षयति मानवम् ९
स तु पित्तानुबन्धेन तेजसा परिपाचितः
प्राप्नोति विलयं श्लेष्मा सम्बन्धेनेव तोयदः १०
शान्ते शीते पुनर्दाहं पित्तात्प्राप्नोति मानवः
उत्पित्तमिन्धनीभूतं वपुर्दहति पावकः ११
गतवेगेनिलः पश्चादूष्मणा परिपाचितः
स्वमेव भजते स्थानमानुलोम्यं च गच्छति १२
एवं ज्वरमवाप्नोति ह्येवमेव च मुच्यते
एतद्बुद्धिमतां प्रोक्तं समासेन चिकित्सितम् १३
दुर्लभा बुद्धिमन्तस्तु तस्माद्वक्ष्यामि विस्तरम्

एकादशधा ज्वरचिकित्सा

एकादशप्रकारं हि ज्वरितानां चिकित्सितम् १४
सर्पिश्चैकादशं विद्यात् तन्मे विस्तरतः शृणु
सिद्धास्स्वेदाः कषायाश्च लेहः पाचनकानि च १५
चूर्णः प्रदेहास्सेकाश्च वटिका मोदकाः पयः
सर्पिश्चैकादशं प्रोक्तं सिद्धमाममथापि च १६
एषां प्रयोगं वक्ष्यामि वीर्याणि च पृथक् पृथक्

ज्वरसम्प्राप्तिः चिकित्सासंग्रहश्च

श्लेष्माणमनिलं चैव जित्वा पित्तन्तु देहिनाम् १७
करोति यस्मादूष्माणं तस्माज्ज्वरित उच्यते
वायुः पित्तेन संसृष्टं श्लेष्मा वा पित्तमूर्च्छितः १८
ऊष्माणं कुरुते यस्मात्ततः पित्तमुपाचरेत्

ज्वरे उष्णोदकप्रयोगविधिः

तृष्यते चोष्णसलिलं देयं दोषविपाचनम् १९

ज्वरघ्नं दीपनीयं च कफपित्तानिलापहम्
स्रोतसां शोधनं चैव रुचिस्वेदकरं नृणाम्  २०
दीप्यमाने हि कायाग्नौ श्लेष्मा वायुश्च शाम्यतः
तयोश्चाप्यनुलोमत्वात्पित्तमप्युपशाम्यति  २१
तस्मादुष्णोदकं पेयं श्रेष्ठमाहुर्नवज्वरे  २२

ज्वरे शीतोदकप्रयोगप्रतिषेधः

शीतं हि सलिलं पीतं कोपयेत्कफमारुतौ
कुर्याद् भूयोऽग्निमृदुतां स्तैमित्यमरुचिं तथा  २३

सिद्धशीतपानविधिः

कामं तु तिक्तकैस्सिद्धं हितं क्वथितशीतलम्
तेषां सामिश्रृतं पानं ये चाप्येकान्तशीतलाः  २४

पेयाविधिः

भोजनार्थं हि षड्रात्रं पेया देया बुभुक्षिते
क्षुत्पिपासापहा पथ्या शकृन्मूत्रानिलापहा  २५
औष्ण्याद्वातकफौ हन्याल्लघुत्वात्परमेव च
हृद्व्यथां विधियुक्तां तु सा हन्यात्स्वेदमावहेत्  २६
तस्माज्ज्वरेषु सर्वेषु ज्वरमुक्ते च मानवे
पाययेद्विधिवत्पेयाः यथास्वौषधसाधिताः  २७
शीतज्वरहरं कृत्स्नमुक्तमेवं चिकित्सितम्

ज्वरे भोज्याभोज्यम्

अत ऊर्ध्वं प्रवक्ष्यामि भोज्याभोज्यं सविस्तरम्  २८
शालयः षष्टिकाश्चैव नीवारास्सप्रमोदका
यवान्नविकृतिश्चापि भोजनेषु हितास्सदा  २९
कपिञ्जलास्सहरिणा वर्तकाः कालपुच्छकाः

एणा वर्तीरकाश्चैव जाङ्गला ज्वरिते हिताः  ३०
मुद्राढकीमसूराणां सतीनानां तथैव च
सिद्धास्सूपाः प्रशस्यन्ते यूषाश्च ज्वरनाशनाः  ३१
उष्णान् व्रीहीन् सयवकान् सक्तुकांश्चित्रकानपि
माषांस्तिलांश्चोष्णवीर्यान् ज्वरितः परिवर्जयेत्  ३२
ग्राम्यानूपौदकं मांसं तथोभे गव्यमाहिषे
छागं सोरणवाराहं दधि शुक्तं वर्जयेत्  ३३
पिष्टान्नानि च सर्वाणि शाकानि विविधानि च
विदाहीन्युष्णवीर्याणि ज्वरितः परिवर्जयेत्  ३४
बर्हिणस्तित्तिरिक्रौञ्चान् कपोतानथ कुक्कुटान्
पञ्चैतान्विष्किरानुष्णान् ज्वरितः परिवर्जयेत्  ३५

वमनादिकालानुनिर्देशः

वमने च विरेके च स्नेहने लङ्घने तथा
प्रोक्ता मे ज्वरिणः कालाः सूत्रस्थाने सविस्तराः  ३६

ज्वरितस्य विनोदनानि

अमात्याश्चालयश्चापि सुहृदश्चानुशासिनः
छन्दज्ञा मतिसम्पन्नाः शास्त्रज्ञानेषु कोविदाः  ३७
ते वदेयुः कथाश्चित्रा धर्मकामार्थसंहिताः
आतुरस्य विनोदार्थं तन्द्राशोकविनाशनः  ३८
दारुणाश्चामनोज्ञाश्च न च प्रीतिविवर्धनाः
पित्तव्याधिपरीतानां कथाश्च परिवर्जयेत्  ३९
उत्साहमेव जनयोदातुरस्य चिकित्सकः
उदग्रस्य हि भैषज्यममृतत्वाय कल्पते  ४०
चान्द्राननाः पीनकुचाः सुगन्धाः शुक्लवाससः

रुजाक्लमविनाशार्थमुपासीत च योषितः ४१

ज्वरे वर्ज्यम्

अत्यशनमतिस्थानमतिचङ्क्रमणानि च
ज्वरितो वर्जयेन्नित्यं प्राणान् रक्षेच्च सर्वशः ४२
क्रोधं स्त्रियं चङ्क्रमणं दिवास्वप्नातिभाषणम्

ज्वरस्य पुनरावृत्तौ हेतवः

गुरूण्यध्वा विरुद्धानि व्यायामो वेगधारणम् ४३
प्रदुष्टो मारुतः पानं निशि जागरणं च यत्
कारणान्युपशान्तस्य ज्वरस्य प्रभवे पुनः ४४
न चैनं स्नापयेज्ञातु सहसा ज्वरकर्शितम्
संदूषितां ह्यस्य तनुं पुनरावर्तते ज्वरः ४५

ज्वरे दैवव्यपाश्रयचिकित्सा

महेश्वरक्रोधभवो ज्वरः प्रोक्ता महर्षिभिः
तस्माज्ज्वरविमोक्षार्थं पूजयेत् ऋषभध्वजम् ४६
स्नानानि शान्तयो होमव्रतानि नियमो यमः
शस्यन्ते चेष्टयः काम्या वेदोक्ता ज्वरनाशनाः ४७
रोगाधिपतिरुग्रौजाः व्याधीनां प्रसवो ज्वरः
सर्वभूतान्तको घोरो हुताशात्मा ज्वरः स्मृतः ४८
प्रसङ्गी दुश्चिकित्स्यः स्याद्भिषग्भिः पापसम्भवः
तस्माद्वेदोदितैर्मन्त्रैर्होमैश्च विनिवर्तयेत् ४९
भूतविद्यासमुत्पन्नं चण्डकर्म ज्वरापहम्
तत्कार्यं भूतवैद्येन तथा नाविशति ज्वरः ५०
रुद्रभक्तेन शुचिना वैद्येनाथ तपस्विना
प्रयतेन प्रयोक्तव्यं चिरज्वरचिकित्सितम् ५१

इत्याह भगवानात्रेयः

इति भेले चिकित्सिते प्रथमोऽध्यायः

द्वितीयोऽध्यायः

अथातो विषमज्वरचिकित्सितं व्याख्यास्याम इति ह स्माह भगवानात्रेयः

विषमज्वरोद्भवे भिषजां मतानि

केचिद्वातात्मकं प्राहुर्भिषजो विषमज्वरम्
सन्निपातोद्भवं केचिदपरे पित्तसम्भवम् १
श्लेष्मजं त्वपरे प्राहुरपरे भूतसम्भवम्
जन्मनक्षत्रपीडाभिरपरे देवचिन्तकाः २
ईदृशः शास्त्रकाराणां मतयोऽथ पृथग्विधाः

अत्र भेलाचार्यमतम्

सन्निपातोद्भवं ह्येतदहं वक्ष्यामि हेतुभिः ३
पक्वाशयस्थपवनो ह्यस्थिमज्जगतस्तथा
कुपितः कोपयत्याशु श्लेष्माणं पित्तमेव च ४
स गम्भीरसमुत्पत्तिस्थानतन्त्रत्रयो महान्
अन्येद्युष्कैकान्तरितौ कुर्याद्वापि चतुर्थकम् ५

विषमज्वरे दूष्यादिदूषणपरिपाटी

मज्जानमस्थि मेदश्च दूषयेत्प्रथमेऽहनि
द्वितीयेऽहनि सम्प्राप्ते दूषयेन्मांसशोणितम् ६
ततस्तृतीये दिवसे दूषयेत्कफमारुतौ
अभिगम्य ततः पित्तं दूषयेत्तु चतुर्थके ७
ज्वरोऽयं प्राणिनां देहे रौद्रो माहेश्वरस्तथा

प्रयतेत प्रशान्तौ तु तस्मादस्य विचक्षणः ८

चतुर्थकस्य दुश्चिकित्स्यत्वम्

गम्भीरस्थानसम्भूतो धातुसंकरदूषितः
तस्माच्चतुर्थको नाम दुश्चिकित्स्यतमो मतः ९

चतुर्थके शोषोपचारातिदेशः

शोषयत्येष भूतानि दारुणो विषमज्वरः
तस्माच्छोषोपचारेण कुर्यात्तस्य चिकित्सितम् १०

विषमज्वरे स्नेहनशोधनचिकित्सा

त्रिफलाक्वाथसिद्धेन घृतेन मतिमान् भिषक्
स्नेहयेत्तं यथान्यायं युक्त्या वृषघृतेन वा ११
स्रंसयेत्तमधोभागं यथाव्याधिबलाबलम्
दोषेष्वामाशयस्थेषु कारयेद्वमनं भिषक् १२
आस्थापनं च कुर्वीत तथा चाप्यनुवासनम्

महापञ्चगव्यघृतम्

एतन्महापञ्चगव्यं विख्यातं सर्पिरुत्तमम् १३
चतुर्थकं मोक्षयति मन्त्रसिद्धियुतो यथा
श्वयथुं पाण्डुरोगं च प्लीहानं सभगन्दरम् १४
उदराणि तथा गुल्मान् कामिलां चापकर्षति १५

पञ्चगव्यघृतम्

शकृद्रसं पयो मूत्रं दधि सर्पिश्च पाययेत्
तत्पञ्चगव्यं शमयेच्छ्वयथुं पाण्डुतां ज्वरम् १६

वृषघृतम्

समूलपत्रशाखस्य शतं कृत्वा वृषस्य तु

जलद्रोणे विपक्तव्यमष्टभागावशेषितम्  १७
गर्भेण वृषपुष्पाणामाढकं सर्पिषः पचेत्
तत्सिद्धं पाययेद्युक्त्या मधुपादसमन्वितम्  १८
कासं श्वासं पाण्डुरोगं तृतीयकचतुर्थकौ
रक्तपित्तं क्षयं चैव वृषसर्पिर्नियच्छति  १९

नागरादिघृतम्

नागरं सैन्धवं चव्यं पिप्पली क्षारचित्रकौ
एतेषां पलिकैर्भागैर्घृतप्रस्थं विपाचयेत्  २०
क्षीरप्रस्थेन संयोज्य शनैर्मृद्वग्निना पचेत्
एतेन गुल्माः शाम्यन्ति कुष्ठानि जठराणि च  २१
ज्वरे च विषमे पेयं प्लीहश्वयथुमेहिनाम्
शूले पाण्ड्वामये चैव ग्रहणीदीपनेषु च  २२
ऊर्ध्ववाताश्च ये केचित्सर्वेषामौषधं परम्

त्र्यूषणादिघृतम्

त्र्यूषणं चित्रकं हिंस्रां विलङ्गानि हरीतकीम्  १३
विभीतकान्यामलकं चिरबिल्वत्वचं तथा
दशैतानि समांशानि श्लक्ष्णान्यक्षसमानि च  २४
तैः पाचयेद्धृतप्रस्थं सम्यक् पयसि षड्गुणे
ग्रहणी दीप्यते तेन वातगुल्मश्च शाम्यति  २५
अर्शसां शमनं चैव गुदशोफे च पूजितम्
एतदेव हि वै श्रेष्ठमुदावर्ते घृतं भवेत्  २६

महापद्मकतैलम्

दर्भवेतसमूलानि चन्दनं मधुकं बला
फेनिला पद्मकोशीरमुभे च कमलोत्पले  २७

किंशुकश्चेति भागाः स्युः पृथक् पञ्चपलोन्मिताः
जलद्रोणे विपक्तव्यं चतुर्भागावशेषितम्  २८
जीवकर्षभकौ मेदां लोध्रं लामज्जकं तथा
कालेयकं सप्रियकं दद्यात्केसरमेव च  २९
त्रिपुण्डरीकं लोध्रं च पद्मकं पद्मकेसरम्
सुरभिं कुङ्कुमं चैव मञ्जिष्ठां मदयन्तिकाम्  ३०
माचिपत्रं च तुल्यानि द्विगुणं कुङ्कुमं भवेत्
चतुर्गुणां च मञ्जिष्ठां सौवीरं स्नेहसम्मितम्  ३१
तैलप्रस्थं पचेत्तेन कषायेणार्धपेषितम्
एतदभ्यञ्जनं तैलं विषमज्वरनाशनम्  ३२
महापद्मकमाख्यातमेतत्सर्वज्वरापहम्
वातपित्तोद्भवं क्षिप्रं ज्वरमेतन्नियच्छति  ३३

महापैशाचिकघृतम्

त्रायमाणां जयां वीरां नाकुलीं गन्धनाकुलीम्
कायस्थां च वयःस्थां च जीरकं सपलङ्कषम्  ३४
छत्रातिच्छत्रजटिलां सूकरीं कर्कटीं तथा
चारटीं पूतनां केशीं वचां कटुकरोहिणीम्  ३५
महापुरुषदन्तां च वृश्चिकालीं कटम्भराम्
स्थिरां पिष्ट्वा तैस्सिद्धं चतुर्थकविनाशनम्  ३६
महापैशाचिकं नाम सर्पिरेतज्ज्वरापहम्
भूतग्रहानपस्मारानुन्मादांश्चापकर्षति  ३७

प्रदेहः धूमश्च

एतैरेवौषधगणैः प्रदेहं कारयेद्भिषक्
धूपयेज्ज्वरितं चैव तथा सम्पद्यते सुखी  ३८

दैवव्यपाश्रयचिकित्सा

बलयः शान्तिकर्माणि होमस्वस्त्ययनानि च
स्नानानि चोपवासश्च शमयन्ति चतुर्थकम्  ३९
स्रष्टारं चास्य रोगस्य भूताधिपतिमच्युतम्
पूजयंश्चाभिगच्छेच्च श्मशाने वृषभध्वजम्  ४०
भूतविद्यासमुत्पन्नैर्बन्धनैस्साधनैरपि
होमैर्बलिविधानैश्च नाशयेद्विषमज्वरम्  ४१
इत्याह भगवानात्रेयः

इति भेले चिकित्सिते द्वितीयोऽध्यायः

तृतीयोऽध्यायः

अथातो रक्तपित्तचिकित्सितं व्याख्यास्याम इति ह स्माह भगवानात्रेयः

रक्तपित्तभेदनिरूपणम्

ऊर्ध्वं चाधश्च मर्त्यानां रक्तपित्तं प्रवर्तते
अतस्तु द्विविधा प्रोक्ता चिकित्सा रक्तपित्तिनः  १

रक्तपित्तनिदानं लक्षणानि च

अत्यम्ललवणाहारात् सततातपसेवनात्
उपवासाद्भ्रमात्त्रासाद्विरुद्धाध्यशनादिभिः  २
तिलपिण्याकशाकानां तथा पिष्टकृतस्य च
पित्तलानां च सर्वेषां मत्स्यादीनां च सेवनात्  ३
ऊर्ध्वं चाधश्च कुपितं रक्तपित्तं प्रवर्तते
घ्राणकर्णाक्षिमुखतः पायुतोमेढ्रतस्तथा  ४
निष्ठीवति सरक्तं च तिक्तमम्लमथापि वा

न च तत्पतितं भूमौ भन्नयन्ति पिपीलिकाः ५
मन्निका वापि तिक्तत्वाच्छुष्कं पित्तं च लन्दयते
सन्दह्यते दूयते च कराठस्तालु च शुष्यति ६
लोहगन्धि मुखं चास्य कराठो धूमायते तथा
एतान्येवं त्वधोभागे लन्नणान्युपलन्नयेत् ७

रक्तपित्ते साध्यासाध्यलन्नणम्

ऊर्ध्वभागं तु साध्यं स्यादधो वै याप्यमुच्यते
सर्वस्त्रोतःप्रवृत्तं तु रक्तपित्तं न सिध्यति ८
रक्तपित्तमधोभागं छर्दनैस्समुपाचरेत्

इति भेले चिकित्सिते तृतीयोऽध्यायः

चतुर्थोऽध्यायः

यन्मिरणां पूर्वरूपाणि

स्वप्नेषु नित्यं पश्यन्ति शुष्कान्दग्धांश्च पादपान्
मन्निकातृणकेशाश्च सम्पतन्त्यस्य भोजने १
रोमाणि मूर्धजाश्चास्य विवर्धन्ते विशेषतः
अवगुराठनशीलश्च रहःकामोत्थकोपनः २
जुगुप्सालुरमर्षी च स्त्रीकामो दुर्बलेन्द्रियः
उचिता हीयते छाया तालुशोषश्च जायते ३
नासास्त्रावः प्रतिश्यायः स्वरभेदश्शिरोरुजा
ऊरू च स्विद्यतोऽत्यर्थं हानिश्च बलवर्णयोः ४
शिरसः परिपूर्णत्वं हस्तपादं च दह्यते
अरुचिश्चाविपाकश्च मूर्च्छा श्वासो मृदुर्ज्वरः ५
न्नतोरस्कश्च कासेन निष्ठीवति सशोणितम्
एतानि पूर्वरूपाणि यन्मिरणां कीर्तितानि च ६

यक्ष्मिणां रूपाणि

षट्चैकादशरूपाणि शुष्यतस्तानि लक्षयेत्

साध्यासाध्यनिरूपणम्

उच्छ्रितोपद्रवं चैनं पूर्वरूपैरभिद्रुतम् ७
प्रक्षीणबलमांसं च न चिकित्सेद्विशोषिणम्
अल्पोपद्रवसंयुक्तमचिरोपद्रवोत्थितम् ८
द्रव्यवन्तं वयःस्थं च प्रत्याख्यायारभेत वै

चिकित्साविधिः

अथास्यानुमतं पूर्वं प्रवक्ष्यामि चिकित्सितम् ९
यदधीत्य भिषग्युक्त्या यशः स्वर्गमवाप्नुयात्
शोषी नित्यजुगुप्सालुः सुखशीलश्च मानवः १०
लोलो द्वेष्टा निकृष्टानां वैद्यभैषज्यकुत्सकः
तस्मात्तस्यानुकूलेन भिषजाऽऽश्वसनेन च ११
असंभ्रान्तेन युक्तेन प्रयोक्तव्यं चिकित्सितम्

बलिनः पञ्चकर्म

शोषिणोऽथ बलस्थस्य पञ्चकर्म विधीयते १२
तदेव क्षीणमांसस्य प्रयुक्तं विषमं भवेत्

यक्ष्मिणः भोजनानि

तस्य संशुद्धकायस्य भोजनान्युपकल्पयेत् १३
कलमान् दीर्घशूकांश्च रक्तशालिं सषष्टिकान्
यवान्नविकृतीश्चापि जाङ्गलांश्च मृगद्विजान् १४
भोजनेषु प्रशंसन्ति मुद्गान् सूपार्थमेव च
संवत्सरस्थितं धान्यं भोजने शोषिणां हितम् १५
तद्धि वीर्यादहीनं स्यान्मांसं सद्योहतं च यत्

विशेषतश्च मांसानि क्रव्यादबिलवासिनाम् १६
शोषी नित्यं निषेवेत मद्यानि विविधानि च

### शोषस्य शोषत्वम्

श्लेष्मा देहे विवृद्धोऽपि वायुना सुसमीरितः १७
पित्तं रक्तं च सन्दूष्य स्रोतांस्यूर्ध्वं रुणद्धि हि
ते परस्परसंरुद्धा धातवः पवनेरिताः १८
कफप्रधाना रुन्धन्ति सर्वा रसवहाः सिराः
तदा ता रसवाहिन्यः सिरा हृदयवाहिकाः १९
रसमाहारजातानां न वहन्ति यथा पुरा
तस्य भुक्तं न रक्ताय न मांसाय च कल्पते २०
न च मेदोऽस्थिमज्जभ्यो न शुक्लत्वाय देहिनाम्
तेषामवृद्धधातूनां बद्धानामयनेष्वथ २१
भुञ्जानानामपि सरोगाणि गात्राणि देहिनाम्
हेतुना तेन शुष्यन्ति शुष्यतां शोषवन्ति च २२
एतच्छोषस्य शोषत्वं मुख्यमाहुर्मनीषिणः

### क्रव्यादमांसस्य मद्यस्य चाभर्हितत्वम्

सत्त्वेष्वतिप्रमाथित्वं व्यालकर्म यथापदि २३
मांसान्यपि तथा तेषां स्रोतांसि विकसन्त्यपि
शोधयन्ति प्रमाथित्वात्स्रोतांसि ग्रथितान्यपि २४
तस्मात्क्रव्यादमांसानि शोषी शक्त्यावशीलयेत्
रहस्यमेतद्वैद्यानामुपदिष्टं चिकित्सकैः २५
मद्यं क्रव्यादमांसं च शोषिणाममृतोपमम्

### अपदेशेन मांसप्रयोगः

वृकाः शृगाला ऋक्षाः श्वसिंहव्याघ्रास्ससूकराः २६

एणशब्देन दातव्या नानाद्रव्याभिसंस्कृताः
गृध्रान् सहंसानुलूकान्मण्डूकाञ्श्येनवायसान्  २७
दद्याद्बर्हिणशब्देन मद्यं च नियतं पिबेत्
आखुमार्जारलोपाकान् द्विजिह्वाञ्शल्यकानपि  २८
नकुलांस्ताम्रचूडांश्च भक्षयेच्च सुसंस्कृतान्
अन्यमांसोपदेशेन मांसान्येतानि दापयेत्  २९
जुगुप्सया वमति वा पाकेऽत्यवहितो भवेत्
तस्माद्रहस्यसिद्धानि मांसान्येतानि भक्षयेत्  ३०

बिलेशयघृतम्

बिलेशयक्रव्यभुजां भिषङ् मांसानि लाभतः
तोयद्रोणेषु दशसु तुलामथ विपाचयेत्  ३१
अष्टभागावशिष्टन्तु रसं विस्रावयेद्भिषक्
गर्भेण जीवनीयानां सर्पिर्द्रोणं विपाचयेत्  ३२
तत्पिबेन्मात्रतः सर्पिर्मांसं तेनैव साधयेत्
कासं श्वासं सहृद्रोगं ज्वरं पार्श्वरुजामपि  ३३
श्वयथुं स्वरभेदं च शोषिणामपकर्षति

रसायनीयसर्पिः सर्पिर्गुडा मोदकाश्च

पञ्चमूलं महद्ध्रस्वं गोलोमीं मधुकं बलाम्  ३४
विपाचयेज्जलद्रोणे चतुर्भागावशेषितम्
तत्कषायं जलं पूतं घृतप्रस्थं विपाचयेत्  ३५
चतुर्गुणेन पयसा जीवनीयैश्च पेषितैः
विदार्यामलाकानां तु तथैवेक्षो रसस्य च  ३६
दद्याद् घृतसमान् भागान् तत्पचेन्मृदुनाऽग्निना
रसायनीयमिति तत् ख्यातं सर्पिर्बलावहम्  ३७

हृद्रोगक्षतकासानां क्षयाणां च निवारणम्
अतः सर्पिर्गुडं कुर्याच्छर्करामधुसंयुतम्  ३८
गोधूमचूर्णेन सह मोदकान्वापि कारयेत्
पूर्वोक्तेषु विकारेषु शोषिणाममृतोपमम्  ३९
क्षीरानुपानं भक्ष्यास्ते मोदका बलवर्धनाः
मद्यानुपानास्सेव्यास्ते शोषः श्लेष्माधिको यदि  ४०

तिलसर्पिर्मोदकाः

प्रस्थार्धं धौतलुञ्चिततिलानां कल्कपेषितम्
तोयप्रस्थेन संयोज्य घृतप्रस्थं विपाचयेत्  ४१
अथ सिद्धं च पूतं च पुनस्तद्विपचेद्घृतम्
सह क्रव्यादमांसेन क्षीरेणेह च सर्वशः  ४२
बिल्वमात्रेण पिण्डेन भावितेन सदाम्बुना
जाङ्गलेन च मांसेन सुकृतेन विधानवित्  ४३
अथ सिद्धं च पूतं च पुनरग्नावधिश्रयेत्
प्रस्थेन पयसा सार्धं सम्यगिक्षुरसाढके  ४४
विदारीं मुद्गपर्णीं च माषपर्णीं कसेरुकम्
शृङ्गाटकमृणालानि पद्मबीजं सजीवकम्  ४५
क्षीरशुक्लां सऋषभां मेदां समधुकां तथा
पयस्यां क्षीरकाकोलीं कन्दं नीलोत्पलस्य च  ४६
सह तालकदम्बेन कल्कांस्तानक्षसम्मितान्
तस्मिन्नालोड्य तत्सर्वं विपचेन्मृदुनाग्निना  ४७
तत्सिद्धं स्रावयित्वा तु निर्वातं स्याद्यथामृतम्
ततः प्रातर्घनीभूतं खजेनाभिप्रमन्थयेत्  ४८
अथात्र शर्कराचूर्णं पञ्चाशत्पलसम्मितम्

मथ्यमानं ततो दद्याद्दत्त्वा दत्त्वा च मन्थयेत् ४९
गन्धार्थं चात्र देयं स्याच्चूर्णं त्वङ्नागपुष्पयोः
एकीभूतं तथा रात्रिमेकां परिवसेदथ ५०
अक्षप्रमाणसंस्थानाः कार्यास्तु मोदकास्तथा
यवगोधूमचूर्णाभ्यां तुगाक्षीर्या च चूर्णितान् ५१
भक्षयेन्मोदकान् काले क्षीरपानं पिबेत्पुनः
यक्ष्माणं शमयन्त्येते वृक्षमिन्द्राशनिर्यथा ५२
असृग्दरं क्षतं क्षीणं हृद्रोगं विषमज्वरम्
उन्मादं रक्तपित्तं च कासं चैतेन साधयेत् ५३

अश्वत्थमूलादिमोदकः

अश्वत्थस्याथ मूलानि शुङ्गानि सफलानि च
शतावरीं पृश्निपर्णीं बृहतीं कण्टकारिकाम् ५४
गोलोमीं श्रेयसीं कालां शारिवां सपुनर्नवाम्
क्षीरद्रोणेषु दशसु कुट्टितानि विपाचयेत् ५५
तच्छृतं शीतलं पूतं खजेनाभिप्रमन्थयेत् ५६
भैषज्यानि च पिष्टानि तत्रेमानि समाचरेत्
मधुकं मधुलिं द्राक्षां मेदां वृषभजीरकौ ५७
तालमज्ञां सलामज्ञं तथा पुष्करबीजकम्
जीवन्तीं त्रायमाणां च मधुकानि कशेरुकम् ५८
नीलोत्पलं पुण्डरीकं वार्ताकानपि चोच्चटाम्
काश्मर्यामलकेक्षूणां विदार्याः स्वरसं च वा ५९
तत्सिद्धं दापयेत् पूतं कलशे राजते दृढे
तुलार्धं शर्करायाश्च दत्त्वा चैवाभिमन्थयेत् ६०
प्रक्षिपेच्च तुलाक्षीर्याः प्रस्थं प्रस्थं च माक्षिकात्
आत्मगुप्ता फलस्य स्याद् गुडस्य मरिचस्य च ६१

उच्चटीक्षुरसाभ्यां च द्वौ प्रस्थौ तत्र दापयेत्
त्वगेलानागपुष्पाणां चूर्णं तत्र प्रदापयेत् ६२
पलिकान् मोदकान् कृत्वा स्थापयेन्मृण्मये नवे
अश्नीयात्तत्पलं कल्यं सायं भूयः पलं नरः ६३
शयनं मृदु सेवेत ब्रह्मचारी समाहितः
कर्मणानेन नियतं यक्ष्माणमपकर्षति ६४
संबृंहयति शुष्कं च पुरुषं दुर्बलेन्द्रियम्
वाजीकरणमप्येतन्नराणां क्षीणरेतसाम् ६५
स्त्रीभिर्हता भारहताः जीर्णाश्चातीतयौवनाः
क्षीणमांसाः क्षीणबलाः ये चाथ क्षीणशोणिताः ६६
पित्तरोगे रक्तपित्ते शोषे दोषज्वरे तथा
हतेन्द्रिया नष्टशुक्लाः सक्तकण्ठाश्च ये स्मृताः ६७
अशक्तमन्दका ये च रतिनष्टेन्द्रियानराः
पुनर्नवांस्तान्कुरुते योगोऽयममृतोपमः ६८
अपस्मारानथोन्मादान् हृद्रोगानपतन्त्रकम्
तेजो वापहृतं येषां भूतधर्मेण केनचित् ६९
क्षीरानुपानात्तन्वन्ति सद्यः पोषं हि मोदकाः
व्याकुलाद्यल्पधातूनां शोषिणां मन्ददेहिनाम् ७०
अपि योगशतेनापि दुःखमेव चिकित्सितम्
तस्माद्रसायनविधिं वर्धमाने क्षये भिषक् ७१
संवत्सरं परमृतुमयनं वा समाचरेत्

पिप्पलीवर्धमानविधिः

पिप्पलीवर्धमानं तु पञ्चपञ्चविवर्धितम् ७२

सुकुमारतैलम्

नस्ये चाभ्यञ्जने पाने प्रशस्तं बस्तिकर्मणि
वातव्याधिषु सर्वेषु ज्ञतज्ञीणे शिरोग्रहे ७३
पार्श्वशूले प्रमेहे च गुल्मे सार्शोभगन्दरे
च्युतभग्नाङ्गहीनानां कासे श्वासे च हृद्ग्रहे ७४
ज्वरातिसारेष्वरुचौ वर्णभेदे स्वरज्ञये
सुकुमारमिदं तैलं बालवृद्धसुखावहम् ७५
एतद्धि वृष्यं बल्यं च मासान्मांसविवर्धनम्
स्वरवर्णकरं चैव शोषिणाममृतोपमम् ७६
निष्पाकश्चास्य तैलस्य सम्यक् सिद्धस्य यो भवेत्
उदश्विदिव दध्यर्थं सोऽपि कृत्यकरो भवेत् ७७
एकादश च षट् चैव शोषजा य उपद्रवाः
सुकुमारं प्रशमयेन्मेघोऽग्नीनिव वृष्टिमान् ७८

शतपाकमधुकतैलम्

लुञ्चितानां तिलानां तु तैलप्रस्थं विपाचयेत्
पलं तु मधुकस्यात्र गर्भं ज्ञीरं चतुर्गणम् ७९
मृदुपाकं च तत्सिद्धं भूय एव विपाचयेत्
चतुर्गुणेन पयसा मधुकस्य पलेन च ८०
एतेन विधिना चैव मधुकस्य शतं पचेत्
शतकृत्वो विपक्वन्तु शतपाकमिति स्मृतम् ८१
पानाभ्यञ्जननस्येषु बस्तौ व्यञ्जनसाधने
भोजने चामृतप्रख्यं नराणां राजयक्ष्मिणाम् ८२
हृद्रोगं तालुशोषं च पार्श्वशूलं प्रतानकम्
तृष्णामुन्मादवीसर्पं कासं श्वासमसृग्दरम् ८३
रक्तपित्तं प्रवृद्धं च सर्वतो भागमूर्च्छितम्

कामलां पाराडुरोगं च पानादेतन्नियच्छति ८४
मुखपाकाक्षिपाकौ च बाधिर्यं कर्णवेदनाम्
नक्तान्ध्यं तिमिरं काचं लिङ्गनाशं सिराचयम् ८५
बिडालिकां पूतिनस्यं शिरोरोगं शिरोग्रहम्
नस्तः कृतं प्रणुदति खालित्यं पलितानि च ८६
अधोभागे रक्तपित्ते रक्तार्शस्सु भगन्दरे
सर्वगात्रगते वाते रक्तपित्तसमुद्भवे ८७
अप्रजस्सु च नारीषु पुंसां नष्टे च रेतसि
जानुत्रिकादिकुब्जेषु प्रशस्तं बस्तिकर्मणि ८८
बहूपरोधाः स्त्रीनित्याः तेषां वृष्यतमं मतम्
प्रयोगेण प्रयुक्तं च रसायनमनुत्तमम् ८९
सहस्रपाकमित्येतत्कल्पेनैतेन साधयेत्
रसायनमिदं प्राहुर्नृणां वर्षसहस्रकृत् ९०

त्वयोन्मर्दनकल्कः

अश्वगन्धा ह्यपामार्गो नाकुली गौरसर्षपाः
तिला बिल्वं च कल्कं स्यात्तत्त्वयोन्मर्दनं परम् ९१

दैवव्यपाश्रयचिकित्सा

मङ्गलाचारसंयुक्तो भवेत्स्वस्त्ययनो नरः
स्नानानि शान्तिहोमांश्च शोषी नित्यं समाचरेत् ९२
इष्टयो वेदविहिता नाशना राजयक्ष्मणः
ताश्च नित्यं निषेवेत पूजयेद् वृषभध्वजम् ९३

उपद्रवाणां यथास्वं चिकित्सातिदेशः

उपद्रवाश्च ये शेषे षट् चैकादश चोदिताः
तेषां चिकित्सितं कुर्याद्यथा स्वे स्वे चिकित्सिते ९४

इत्येवं प्रयतेनोक्तं राजयक्ष्मचिकित्सितम्
यशः स्वर्गकरं पुण्यं शिष्याणामर्थसिद्धये ९५
इत्याह भगवानात्रेयः
इति भेले चिकित्सिते चतुर्थोऽध्यायः

पञ्चमोऽध्यायः

अथातो गुल्मचिकित्सितं व्याख्यास्याम इति ह स्माह भगवानात्रेयः

गुल्मभेदनिर्देशः

पञ्च गुल्माः समुद्दिष्टा निदानेषु सविस्तरम्
गुल्मत्वं तेषु वक्ष्यामि चिकित्सां तु पृथक् पृथक् १
मारुतः कुपितो देहे स्रोतांस्युन्नह्य सर्वशः
अभ्यागत्य दूषयति पूर्वं पित्तं कफं ततः २
दूषयत्यथ रक्तं च मेदो मांसं विधावति
स सङ्घातस्थिरीभूतो गुल्मत्वमुपपद्यते ३
दुष्टानां हन्तुकामानां परं प्राणभृतां यथा
हस्त्यश्वरथयानानां संघातो गुल्म उच्यते ४
एवं देहे रसादीनां धातूनां विप्रकर्षणम्
संसर्गो गुल्म इत्युक्तः संघातो गुल्म उच्यते ५
स्तम्बिनिस्तम्बिनीनां तु वल्लीनां वीरुधामपि
संघातो गहनं गुल्मः तद्वद् गुल्मस्तु देहिनाम् ६
अमूर्तत्वाद्धि वातस्य संवित्तिर्नोपजायते
सन्धाय पित्तश्लेष्माणौ मारुतो गुल्मतां व्रजेत् ७
मधूच्छिष्टमयं पिण्डं चिन्वन्ति भ्रमरा यथा
तथा कोष्ठेषु पवनो धातुंस्तान्विचिनोत्यपि ८

वातादिगुल्मानां स्थानानि लक्षणं च

स्थानानि तस्य गुल्मस्य शंसन्ति गुरुलाघवम्
कुक्षिबस्तिगतो गुल्मो वातभूयिष्ठ उच्यते ९
स वातगुल्मरूपाणि कुर्यात्स्थानवशेन तु
तथैव पित्तस्थानस्थः पित्तरूपाणि दर्शयेत् १०
एवं श्लेष्मणि रक्ते च सन्निपाते च सर्वशः
सर्वेषां सन्निपाते तु स्वं स्वं रूपं निदर्शनम् ११
आगन्तुर्दूषयत्यत्र धातुं स्थानस्थ उल्बणः

स्थानानुसारिचिकित्साविधिः

चिकित्सितं तु स्थानस्य स हि तत्र बलाधिकः १२
यदि बस्तिगतः पाकं वातगुल्मस्तु गच्छति
हृन्नाभ्योरन्तर गुल्मः पाकं गच्छति पैत्तिकः १३
हृदि च श्लेष्मगुल्मस्तु पाकं यात्यननुष्ठितः
पच्यते सन्निपातात्तु गुल्मश्शोणितजस्तथा १४
दोषद्वयेन संसृष्टाः सर्वे गुल्माः प्रमाथिनः
तस्मात्तेषां भेदनीयाः क्रियास्सर्वाः प्रयोजयेत्
अत्यर्थं स्निह्यमानोऽपि गुल्मो वृद्धिमवाप्नुयात् १५

वातगुल्मचिकित्सा

अतस्तु वातगुल्मस्य प्रवक्ष्यामि चिकित्सितम्
प्रभुर्हि सर्वभूतानां वायुः प्राणेश्वरो बली १६

दशाङ्गघृतम्

हरीतकी त्रिकटुकं वचा कटुकरोहिणी
सौवर्चलं यवक्षारो विडङ्गं चित्रकस्तथा १७
अक्षप्रमाणैरेतैस्तु घृतप्रस्थं विपाचयेत्

तत्सिद्धं स्रावयित्वा तु पाययेत्तु यथाबलम्  १८
वातगुल्मं क्रिमिं कासं श्वासं प्लीहानमेव च
दशाङ्गं नाशयत्येतद्रोगानं वज्रमिवासुरान्  १९

दाधिकघृतम्

द्वे पञ्चमूल्यौ सुषवीमश्वगन्धा पुनर्नवाम्
कालां छिन्नरुहां रास्नां भार्ङ्गीं गोक्षुरकं बलाम्  २०
शटिं पुष्करमूलं च पलाशं गन्धसंज्ञकम्
एतेषां द्विपलान् भागान् जलद्रोणे विपाचयेत्  २१
कोलानां सकुलुत्थानां माषाणां च यवैस्सह
प्रस्थं प्रस्थं पृथक् कृत्वा तस्मिन्नेव समावपेत्  २२
तेन पादावशिष्टेन घृतप्रस्थं विपाचयेत्
दध्यादिभिस्समं शुक्तमारनालं तुषोदकम्  २३
दाडिमाम्रातकरसं मातुलुङ्गरसं तथा
चतुर्गुणं चात्र दधि गर्भे चैषां समावपेत्  २४
कारवीं त्र्यूषणं दन्तीं त्रीण्येव लवणानि च
हिंस्रां रास्नां वचां चैव यवानीमम्लोवेतसम्  २५
विडङ्गं दाडिमं हिङ्गुं नीलिकां त्रिवृतामपि
द्वौ क्षारौ चाजमोदां च पाठां पाषाणभेदकम्  २६
ऊषकं वृषकं भार्ङ्गीं श्वदंष्ट्रां हपुषामपि
त्रपुसोर्वारुबीजानि शतवीर्योपकुञ्चिके  २७
अजाजीं चित्रकं मूर्वां तुम्बुरुं गजपिप्पलीम्
धान्यकं सुरसं चैव दद्यादक्षेण सम्मितम्  २८
गर्भेणानेन तत्सिद्धं पाययेत्सर्पिरुत्तमम्
रक्तगुल्मादृते सर्वान् गुल्मानेतत्प्रणाशयेत्  २९
एकाङ्गगे पक्षगते गृध्रस्यां प्लीह्नि चैव हि

हृद्रोगे ग्रहणीदोषे वातगुल्मे च दारुणे ३०
दाधिकं नाम विख्यातं सर्पिरेतन्महागुणम्
उन्मादं कोष्ठशूलानि चापस्मारं च नाशयेत् ३१

षट्पलघृतम्

यावशूकं तथा क्षारं सैन्धवं हस्तिपिप्पलीम्
पिप्पलीं शृङ्गबेरं च मरिचं च समावपेत् ३२
एषां षरणां षडेव स्युः पृथग्भागाः पलं पलम्
एषामर्धपलान् भागान् कषायमुपसाधयेत् ३३
पेष्यैरर्धपलीनैस्तु घृतप्रस्थं विपाचयेत्
स्नेहतुल्यं कषायं तु क्षीरं तद्द्विगुणं भवेत् ३४
इत्येतत् षट्पलं नाम सर्पिर्गुल्मविनाशनम्
प्लीहानमर्शांसि तथा ग्रहणीदोषमेव च ३५
बस्तिकुरडलवर्ध्मानि पानादेवापकर्षति
एषामन्यतमैः स्नेहैः स्नेहितं वातगुल्मिनम्
विरेचनेन स्निग्धेन युक्त्या संशोधयेद्भिषक् ३६

क्षीरपाकः

घृतं च सक्तुं च तथा चित्रकं सैन्धवं वचाम्
पिप्पलीं च पचेत्क्षीरं प्रशस्तं चावतारयेत् ३७
ततो बिडालपदकं पिबेदुष्णेन वारिणा
घृतेन पयसा वापि मद्येनोष्णेन वारिणा ३८
वातगुल्मं नुदत्येष गुल्मशूलानि यानि च
सप्लीहानमुदावर्तं श्लेष्मगुल्मं च नाशयेत् ३९

क्षारागदः

महौषधं देवदारु वासा कटुकरोहिणी

चित्रकः पिप्पलीमूलं पिप्पल्यो हस्तिपिप्पली ४०
कुष्ठं च सर्पगन्धा च पञ्चैव लवणानि च
द्वौ क्षारौ त्रिवृता दन्ती द्रवन्ती चोपकुञ्चिका ४१
एषामर्धपलान् भागान् लवणानां पलं पलम्
चूर्णानि दध्नः प्रस्थार्धे समालोड्य विपाचयेत् ४२
वसातैलघृतानां च प्रस्थं प्रस्थं प्रदापयेत्
प्रदीप्तं च यथाशान्तमथैनमवतारयेत् ४३
ततो बिडालपदकं पिबेदुष्णेन वारिणा
घृतेन पयसा वापि मद्येनाम्लेन वा पुनः ४४
एष क्षारागदो नाम वातगुल्मविनाशनः
प्लीहानमर्शःशूलानि वर्ध्मोदावर्तकुण्डलम् ४५
क्रिमीन् सग्रहणीदोषान् विषान् वातापतानकौ
सर्पमूषकदंशांश्च ग्रन्थितान् गदयोजितान् ४६
वातश्लेष्मसमुत्थानं सन्निपातात्मकं तथा
प्रसह्य नाशयेद्गुल्मं छिन्नाभ्राणीव मारुतः ४७
वन्ध्या च लभते गर्भं गरानपि च नाशयेत्
अपस्मारानथोन्मादान् -----
इत्याह भगवानात्रेयः

इति भेले चिकित्सिते पञ्चमोऽध्यायः

## षष्ठोऽध्यायः

## कुष्ठसम्भवः

--- पित्तं भृशं देहे प्रकुप्यति
तत्प्रदुष्टं दूषयति रक्तमांसमथोल्बणम् १
तत्र कुष्ठानि जायन्ते देहे बहुविधानि तु

तेषां रूपाणि वक्ष्यामि चिकित्सां च यथाक्रमम्  २

कुष्ठद्रव्याणि

दोषाणां सञ्चितानां तु त्वङ्मांसाच्छास्त्रचारिणाम्
प्रदूषणं हि सर्वेषां कुष्ठमित्यभिधीयते  ३

कुष्ठनिदानसम्प्राप्ती

विरुद्धमाहारयतोऽप्यजीर्णाध्यशनेन च
छर्दिमूत्रपुरीषाणां वेगानां च विधारणात्  ४
ग्राम्यानूपौदकं मांसं शाकं हरितकानि च
मद्यमम्लमथात्यर्थं सेवित्वा यः पिबेत्पयः  ५
भुक्त्वा वाप्युष्णमाहारं मधु मांसं च सेवते
मद्यं मधु च यः पीत्वात्युष्णमन्नं च सेवते  ६
विदग्धभुक्तो यश्चापि ग्राम्यधर्मं निषेवते
उष्णातपाभ्यां सहसा यश्चाप्यप्सु निमज्जति  ७
तस्योष्मा सन्निरुद्धस्तु प्रकोपयति मारुतम्
उदीरयति वायुस्तु दूषितो दोषसंचयान्  ८
दोषाश्शिराः प्रपन्नास्ते रुधिरं दूषयन्त्यति
रक्तमांसनिरुद्धास्तु वातपित्तकफास्त्रयः  ९
जनयन्त्याशु कुष्ठानि नृणामष्टादशैव तु
निदानेष्वपि निर्दिष्टं निदानं साप्तकुष्ठिकम्  १०

तत्तद्दोषाधिककुष्ठलक्षणम्

अष्टादश तु कुष्ठानि तेषां वक्ष्यामि लक्षणम्
यत्कुष्ठमरुणाभासं श्यामं रूक्षं सवेदनम्  ११
पिपीलिकाकीर्णमिव कर्कशं चापि वातिकम्
क्षिप्रमुत्तिष्ठते यस्तु दूष्यते परिदह्यते  १२

ताम्रं श्यावप्रकुपितं सज्वरं चापि पैत्तिकम्
समुत्पन्नेषु वा तेषु स्तिमितं बहुलं गुरु १३
पाण्डुं स्निग्धं च गुरु च यत्कुष्ठं श्लेष्मसम्भवम्
स्फुटितं स्रावबहुलं दाहरागरुजान्वितम् १४
त्वग्रोमनखमांसैश्च दीर्यद्भिस्सान्निपातिकम्

कुष्ठपूर्वरूपाणि

प्रादुर्भविष्यतां चैव पूर्वरूपाणि मे शृणु १५
तानि संलक्ष्य मेधावी चिकित्सितमुपाचरेत्
ऊष्मायणं परीतापः स्वेदो रौक्ष्यं विवर्णता १६
सुप्तत्वं रोमहर्षश्च गात्राणां गौरवं क्लमः
रागः पिपासा दौर्बल्यं दवथुः पिटकादयः १७
ततः कुष्ठानि जायन्ते तेषां वक्ष्यामि लक्षणम्

अष्टादशकुष्ठलक्षणम्

स्वेदनं काकणाभासं समुत्पन्नं सवेदनम् १८
स्फुटितं नीलपर्यन्तं काकणं कुष्ठमुच्यते
उदम्बरनिभैर्यत्तु मण्डलैर्बहुभिश्चितम् १९
निरास्रावैः स्रवद्भिर्वा विद्यादौदुम्बरं तु तत्
मण्डलैर्बन्धुजीवाभैरुत्सन्नैश्च विदाहिभिः २०
विद्यान्मण्डलकुष्ठं तद्वेदनाचोषणान्वितम्
ऋश्यजिह्वोपमं कुष्ठं ऋश्यजिह्वं विभावयेत् २१
पुण्डरीकदलाभासं पुण्डरीकं तु तद्विदुः
अलाबुपुष्पसदृशं सिध्मं कुष्ठमुदाहृतम् २२
कपालकुष्ठं कृष्णन्तु मण्डलैः परुषं तथा
चर्मकुष्टं तु बहुलं हस्तिचर्मनिभं खरम् २३

सस्फोटका समन्तापा पामा कराडूरुजान्विता
दृढः पुनः प्रस्रवति कराडूरोधान्वितं च यत् २४
वर्तते च समुत्पन्नं किटिबं तत्प्रकीर्तितम्
श्यावा रक्ता समुत्पन्ना प्रक्लिन्ना स्राविणी तथा २५
मांसेनोपचिता युक्ता विज्ञेया सा विचर्चिका
परिशुष्काणि रूक्षाणि कराडूराणि घनानि च २६
मराडलान्युन्नताग्राणि दद्रुकुष्ठं हि तत्स्मृतम्
अरुड्भिश्चायमानं तु नीललोहितकैः खरैः २७
बहुभिश्च स्रवद्भिश्च शतारुष्कन्तु तद्विदुः
शालिशूकप्रतीकाशैर्लोमभिः शुक्ललोहितम् २८
अन्योन्यैर्मराडलैर्विद्धं श्वित्रं तदुपपादयेत्
मीनमूषिककीटानां विषवेगेन दूषितम् २९
सकन्डूरागपिटकं विषजं श्याममेव वा
पाणिपादतलाङ्गुष्ठपार्ष्णिदेशेषु जायते ३०
स्फुटितं वेदनादाहयुक्तं वैपादिकं स्मृतम्
उदुम्बरसवर्णं तु समुत्पन्नं सवेदनम् ३१
पिच्छारागविवर्णं च कुष्ठं स्थूलारुरुच्यते
विसर्पैस्संपरिक्रान्तं विकूणं सपरिस्रवम् ३२
तदेककुष्ठमित्युक्तमेकं वीसर्पसम्भवम्
एतान्यष्टादशोक्तानि कुष्ठानीह स्वलक्षणैः ३३

साध्यासाध्य कुष्ठानि

नव तेषामसाध्यानि चिकित्स्यानि तथैव च
पुराडरीकमथ श्वित्रं ऋष्यजिह्वं सकाकणम् ३४
उदुम्बरशतारुष्कं चर्मकुष्ठं च यत्स्मृतम्

एककुष्ठं तु यत्प्रोक्तं कुष्ठं वैपादिकं च यत्  ३५
एतानि नव कुष्ठानि न सिध्यन्ति कदाचन
सिध्मं विचर्चिका पामा दद्रुश्च किटिकानि च  ३६
कपालकुष्ठं स्थूलारुर्मण्डलं विषजं च यत्
एतानि नव साध्यानि कुष्ठान्याहुर्मनीषिणः  ३७

असाध्यसाध्यकुष्ठानां कर्मदोषजत्वम्

कर्मजानि नव ह्येषां दोषजानि नवैव तु
कर्मजानि न सिध्यन्ति सिध्यन्ति हीतराणि तु  ३८
आत्मवान्मुच्यते तेभ्यः कुशलेन स्वनुष्ठितः

कुष्ठे सिरावेधस्याभ्यर्हितत्वम्

रक्तोद्भवानि कुष्ठानि सन्निपातोद्भवानि च  ३९
तस्मात्तेषां प्रथमतः सिराकर्म विधीयते

अल्पकुष्ठेषु प्रच्छनादि

कुष्ठस्यात्यल्पतो न्याय्यं बहुशः प्रच्छनं स्मृतम्  ४०
जलूकालाबुशृङ्गैर्वा शोणितं तस्य निर्हरेत्

वातादिदुष्टशुद्धरक्तलक्षणम्

शृणु रक्तविकारांस्तु पृथग्धातुसमाश्रितान्  ४१
सफेनमरुणं रूक्षं वातिकं शोणितं तनु
नीलपीतासितं तप्तं रक्तं पित्तान्वितं स्मृतम्  ४२
विज्जलं पाण्डुरं स्निग्धं तन्तुमच्च कफात्मकम्
सर्वेषां दर्शने विद्याच्छोणितं सान्निपातिकम्  ४३
इन्द्रगोपकसङ्काशमदुष्टं रक्तमुच्यते

शोधनविधिः सापवादः

नरस्य मुक्तरक्तस्य प्रतिभुक्तवतस्तथा ४४
सिद्धैर्घृतैः स्नेहितस्य कुर्यात्संशोधनं ततः
वमनं रेचनं चैव तथा शीर्षविरेचनम्
आस्थापनं च कुर्वीत न चैनमनुवासयेत् ४५

कुष्ठे पथ्यापथ्यम्

शालीन् सषष्टिकांश्चैव जाङ्गलांश्च मृगद्विजान्
यवान्नविकृतीश्चैव कुष्ठी नित्यं समाचरेत् ४६
ग्राम्यानूपौदकं मांसमिक्षुस्तिलघृतं सुरा
दधि दुग्धं दिवास्वप्नः फलान्यम्लानि मैथुनम् ४७
मूलकं पिष्टविकृतिर्वसा हरितकानि च
कफं पित्तं च रक्तं च सर्वमेतत्प्रकोपयेत् ४८
एवंविधानि चान्नानि ह्यभिष्यन्दकराणि च
अजीर्णाध्यशनं चैव कुष्ठी नित्यं विवर्जयेत् ४९

कुष्ठघ्नयोगनिर्देशः

धान्वन्तरं पिबेत्सर्पिः स्नेहनार्थेषु कुष्ठितः
महद्वै पञ्चगव्यं वा तैलं शैरीषमेव वा ५०
पिप्पलीवर्धमानं वा माक्षिकेण समाचरेत्
अरिष्टमभयारिष्टं गण्डीरारिष्टमेव वा ५१

खदिरकल्पः

मुष्टिं खदिरसारस्य कुट्टितं प्रतिभोजयेत्
त्र्यहं शृतं पिबेत्तच्च स्नायादुद्वर्तयेत्ततः ५२
तेन सिद्धं च भुञ्जीत पानीयार्थं च कारयेत्
पक्षं मासमृतुं वापि षण्मासानेवमाचरेत् ५३
प्रसह्य खदिरो हन्ति कुष्ठानि सुगुरूण्यपि

संवृद्धो लोकपर्याये युगान्ताग्निर्नगानिव ५४

अभयाप्रयोगः

पञ्चाभयास्तु सव्योषाः सगुडा वापि चूर्णिताः
लिह्यात्पथ्याशनः कुष्ठशान्तिर्वा नचिराद्भवेत् ५५

रसाञ्जनहरिद्राप्रयोगौ

गोमूत्रेण हरिद्रां तु रसाञ्जनमथापि वा
प्रयोगेण पिबेत्कुष्ठी तथा रोगात्प्रमुच्यते ५६

द्राक्षादिचूर्णम्

द्राक्षा हरिद्रा मञ्जिष्ठा त्रिफला देवदारु च
नागरं पञ्चमूल्यौ द्वे मुस्ता मधुरसा तथा ५७
सप्तपर्णो ह्यपामार्गः पिचुमन्दाटरूषकौ
विडङ्गं चित्रकं दन्ती पिप्पल्यो मरिचानि च ५८
तेषां तु समभागानां कुष्ठी चूर्णपलं पिबेत्
मासं गोमूत्रसंयुक्तं तथा कुष्ठात्प्रमुच्यते ५९

उष्ट्रीक्षीरविधानम्

उष्ट्रीक्षीरं पिबेज्जीर्णे क्षीरवृत्तिर्भवेन्नरः
जातक्रिमीणि कुष्ठानि च्युतरोमनखान्यपि ६०
अपि वा शीर्णमांसानि क्षीरमौष्ट्रं विनाशयेत्
एतास्त्वाभ्यन्तराः प्रोक्ताः क्रियाः कुष्ठनिबर्हणाः ६१

बहिःपरिमार्जनानि

बाह्यां क्रियां प्रवक्ष्यामि विस्तरेण निबोध मे
आलेपनानि कुर्वीत मुक्तरक्तस्य देहिनः ६२
विघृष्य शस्त्रैः पत्रैर्वा गोमयैरपि वा पुनः

ततः कुष्ठानि लेप्यानि प्रलेपैः कुष्ठनाशनैः ६३
स्वर्जकाकुष्ठतुत्थानि विडङ्गमरिचानि च
मनःशिला च लोध्रं च लेपः कुष्ठविनाशनः ६४
अवल्गुजफलं दन्तीं श्योनाकं गजपिप्पलीम्
चित्रकौ सर्षपौ द्वौ तु हरिद्रे द्वे विपेषयेत् ६५
मातुलुङ्गरसेनैतत्समालोड्य निखानयेत्
सप्तरात्रात्परं चैव कुष्ठानां लेपनं परम् ६६
दद्रुं कपालकुष्ठानि किटिकानि विचर्चिकाम्
स्थूलारुष्काणि विषजं सिध्मानि च नियच्छति ६७
करवीरो लाङ्गलिकी दन्ती हिंस्रा शुकानना
चित्रकार्कस्त्रिकटुकं त्रिफला कटुरोहिणी ६८
कोशातकी भद्रमुस्ता बृहती सर्षपा वचा
करञ्जबीजं सुधा च स्वर्णक्षीरी निदिग्धिका ६९
पिचुमन्दश्च जात्याह्वः पीलुतिल्वकपल्लवम्
सौधामलकबीजानि कर्णिकारोह्यवल्गुजः ७०
--- भल्लातकम् ----

इति भेले चिकित्सिते षष्ठोऽध्यायः

## सप्तमोऽध्यायः

### प्रमेहे हिताहितम्

स्त्रियं च युक्त्या सेवेत दिवास्वप्नं च वर्जयेत्

### दोषभेदेन चिकित्सासूत्रम्

कषायस्नाननित्यस्य कषायोदकसेविनः १
विशेषतः श्लेष्ममेहान् तीक्ष्णैरेव समाचरेत्

सकषायं च तिक्तं च पैत्तिकेषु प्रयोजयेत्  २
असाध्यवातजान्मेहांश्चतुरः परिवर्जयेत्

प्रमेहोपद्रवाः

अरुचिश्चाङ्गमर्दश्च तृष्णाकासौ भ्रमस्तमः  ३
शूलानि पिटका कण्डूः प्रमेहाणामुपद्रवाः

प्रयोगातिदेशः

अक्रियाभिः प्रमेहेषु पिटकास्वपि कारयेत्  ४
उपद्रवैश्च युक्तानां पिटकाभिस्तथैव च
प्रमेहिणामिदं प्रोक्तं मया भैषज्यमुत्तमम्  ५
व्यस्तैरेतैस्समस्तैश्च योगैस्तु प्रविभागशः
चिकित्सां कल्पयेद्वैद्यो यथादोषं यथाबलम्  ६
विंशतैर्मूत्ररोगाणां लक्षणानि निरीक्ष्य तु
दोषसंसर्गहेतूंश्च ततो योगान् प्रकल्पयेत्  ७
उद्देशमात्रं तेषां तु तस्माद्वक्ष्यामि भेषजम्
भूयो मूत्रप्रशान्त्यर्थं प्रविभागं च तच्छृणु  ८

प्रमेहभेदानां पृथक् चिकित्सा

शतावरीमूलरसः समांशो मधुसर्पिषा
इक्षुमेहे तु पातव्यः कफपित्तप्रशान्तये  ९
किराततिक्तस्वरसः पटोलारुकयोस्तथा
सक्षौद्रः शमयेन्मेहं क्वाथस्तूदकसंज्ञितम्  १०
पिप्पली शृङ्गिबेरं च मरिचानि तथैव च
पिबेत्सुखाम्बुना ह्येतत्सान्द्रमेहात्प्रमुच्यते  ११
चव्यचित्रकमूलानि पूतिकस्य त्वचस्तथा
खले यूषेषु संस्कृत्य भुञ्जानो वै सुखी भवेत्  १२

क्षीरसिद्धैर्यवैर्भक्ष्यैर्यच्छस्तं हिङ्गुसंयुतम्
घृतं प्रसङ्गेन पिबन् भस्ममेहात्प्रमुच्यते १३
कपित्थश्चाजमोदा च मरिचानि तथैव च
ततो युतं तैर्लवणं काचप्रोक्तं प्रदापयेत् १४
पिप्पलीकणसंयुक्तं मधुयुक्तं सशर्करम्
जयेल्लवणमेहन्तु पीतं शीतेन वारिणा १५
मेहयुक्तेन भोक्तव्यं सान्द्रप्रस्रवणेन वा
एतत्तु विजयेन्नित्यं मेहं लवणसंभवम् १६
एलाप्रवालकं हिङ्गु लवणं च समं भवेत्
मद्येनोष्णेन वा पीतं मेहं ससिकतं जयेत् १७
तुबुरूणि कपित्थानां निर्यासं क्षौद्रसंयुतम्
शुक्लमेहे प्रशंसन्ति यवान्नस्य च सेवनम् १८
सकुलुत्थानि यूषाणि सद्रवाणि विशेषतः
भोज्यानि शुक्लमेहेषु यवान्नविकृतिस्तथा १९
श्वदंष्ट्रादर्भमूलैस्तु केवलं क्वथितं पयः
सशर्करं पिबेज्जन्तुः क्षारमेहात्प्रमुच्यते २०
द्राक्षाश्शृतं वापि पिबेत् तथा क्षीरिश्शृतं नरः
पित्तमेहात्प्रमुच्येत क्षारमेहाच्च सर्वशः २१
पीतामञ्जिष्ठाचूर्णौ द्वौ मेहनाच्च प्रयोजयेत्
सक्षौद्रं शीतमेहे तु यवान्नोपहितं सदा २२
मदयन्त्याश्च पत्राणां कल्कं क्षौद्रयुतं पिबेत्
दर्भमूलस्य च तथा रक्तमेही सुखी भवेत् २३
पिबेत्तु ते सपयसी नीलमेहात्प्रमुच्यते
प्ररोहैः क्षीरिवृक्षाणां क्षीरं संक्वथितं पिबेत् २४
सशर्करेण मुच्येत नीलमेहात्तु पैत्तिकात्

कुमुदोत्पलदराडैश्च सनालैः क्वथितैस्तथा २५
पिबेत्प्रायो यथाशक्ति वारिमेहात्प्रमुच्यते
समां ज्ञीराशनश्चापि यवान्नमितभोजनः २६
शर्करासमभागं तु ज्ञौद्रेण सह संसृजेत्
शीतेन तोयेन पिवन्नम्बुमेहात्प्रमुच्यते २७
इत्येतत् षोडशानां तु कफपित्तहरं पृथक्
चिकित्सितं मया प्रोक्तं प्रमेहाणां विनाशनम् २८
असाध्या वातजाश्चैव विज्ञेया भृशदारुणाः
अवगाह्यातिसूक्ष्मत्वाद्दाया प्रस्रवगं शृतम् २९
आस्थापनैर्वातहरैः सुकृतैश्चानुवासनैः
मज्ञप्रमेहिणं दृष्ट्वा बहुशस्तमुपाचरेत् ३०
प्रातः प्रातश्च सेवेत केवले मधुसर्पिषी
कोरदूषयवान्नानि स्थितानि च विशेषतः ३१
हस्तिमेहं जयेदेवं बस्तिस्वेदैः प्रयत्नतः
यत्नवान्वातमेहं हि बस्तमूत्राणि वा चरेत् ३२
पाययेच्चारयेच्चापि गजमेहं भयावहम्
कषायैस्तिक्तकटुकैः रसैरेतैः पिवेत्पयः ३३
शास्त्रोक्तामथ संप्रेक्ष्य क्रियामेतां विचक्षणः
यथास्वं हि सम्प्रधार्य प्रमेहान् साधयेद्भिषक् ३४
एतत्प्रमेहिकं प्रोक्तं शिष्याणामर्थसिद्धये
चिकित्सितं विस्तरेण यथावदनुपूर्वशः ३५
इत्याह भगवानात्रेयः

इति भेले चिकित्सिते सप्तमोऽध्यायः

## अष्टमोऽध्यायः

अथात उन्मादचिकित्सितं व्याख्यास्याम इति ह स्माह
भगवानात्रेयः
पञ्चोन्मादास्समाख्याता निदानेषु सविस्तराः
सलिङ्गास्ससमुत्थानाः शृणु तेषां चिकित्सितम् १
चित्तबुद्धीन्द्रियाणां हि तेषामपि विचेष्टितम्

### मनश्चित्तबुद्धीनां स्थानादि

शिरस्ताल्वन्तरगतं सर्वेन्द्रियपरं मनः २
तत्रस्थं तद्धि विषयानिन्द्रियाणां रसादिकान्
समीपस्थान् विजानाति त्रीन् भावांश्च नियच्छति ३
सुमनःप्रभवं चापि सर्वेन्द्रियमयं बलम्
कारणं सर्वबुद्धीनां चित्तं हृदयसंश्रितम् ४
क्रियाणां चेतरासां च चित्तं सर्वत्र कारणम्
सुचित्तास्सत्पथं यान्ति दुश्चित्तास्तु विमार्गगाः ५
विदितं मनसा चित्तमालभ्य प्रभवेत्ततः
ततो बुद्धिः प्रभवति कार्याकार्यविचारिका ६
शुभाशुभं हि कुर्वाणा बोधनं बुद्धिरिष्यते
बोधनाच्चापि बोध्यस्य नरो बुध इहोच्यते ७
सा बुद्धिः परमात्मा च स शरीरे प्रकीर्तितः
यथा कृती कर्मकरः क्रियां योजयते नृषु ८
मनसश्चित्तबुद्धीनां स्थानान्येतानि कर्म च
सन्दूषितानां तेषां तु शृणु हेतुमतः परम् ९

### उन्मादसम्प्राप्तिः

ऊर्ध्वं प्रकुपिता दोषाः शिरस्ताल्वन्तरे स्थिताः

मनः सन्दूषयन्त्याशु ततश्चित्तं विपद्यते १०
चित्ते व्यापदमापन्ने बुद्धिर्नाशं नियच्छति
ततस्तु बुद्धिव्यापत्तौ कार्याकार्यं न बुध्यते ११

मदोन्मादनिरूपणम्

तस्माद्विशेषं वक्ष्यामि ह्युन्मादमदयोरपि १२
शोकात्कोपात्तथा हर्षाद् द्रव्याणां च विनाशनात्
चलिते चित्तमनसि मदमाशु नियच्छति १३
प्रध्यायति प्रस्विपिति रोदितीहानिमित्ततः
हसत्यकस्मान्निद्रालुरल्पवाङ् नित्यमुत्सुकः १४
त्रस्तः शरीरी दीनाक्षः क्रोधनो निरपत्रपः
पुरस्तादवलोकी च न यथावृत्त एव च १५
परुषत्वं तथा लोम्नामाविलं चक्षुषेरपि
एतानि यस्य रूपाणि स मदो नाम कीर्तितः १६
विवर्धमानस्तु मद उन्मादत्वं नियच्छति
सवातिकानि रूपाणि श्लेष्मपित्तोद्भवानि च १७
उन्मादस्तूच्यते धीरैः सन्निपातात्मकानि च
एतल्लक्षणमुद्दिष्टमुन्मादस्य निरुक्तितः १८

चिकित्सा

निदाने पूर्वमुद्दिष्टं शृणु तेषां चिकित्सितम्
स्नेहितं स्वेदितं चैव योजयेत्पञ्चकर्मणा १९
दाधिकं वा पिबेत्सर्पिस्तैलं शैरीषमेव वा
शतपाकं बलातैलं महापैशाचिकं घृतम् २०
दाधिकं च महाक्षारमुन्मत्तः शीलयेत्तथा
यच्चिकित्सितमाख्यातमपस्मारविनाशनम् २१

तदेव सर्वं निखिलेषून्मादेष्ववचारयेत्

उपायैश्चिकित्सा

घातयेत्तं कशाभिश्च बध्नीयात्ताडयेत्तथा २२
गजेनाप्यथवाश्वेन त्रासयेत्पन्नगेन वा
पुनस्तृणाग्निना वापि सर्वतस्समवाकिरेत् २३
अवकीर्याथवाङ्गारैः प्रदीप्तैः पारिभद्रकैः
प्रयुक्तं शीतलेनैव जलेनाभ्युक्षयेत्पुनः २४
प्रसारयेद्वा सरिति सरणे वा निरोधयेत्
बुभुक्षया शोषयेद्वा कूपे प्रक्षिप्य मानवः २५
अपूर्वा भीषयेयुस्तं पुरुषाः शस्त्रपाणयः
वित्रासयेयुर्वैद्यास्तं त्रासनैस्तु पृथग्विधैः २६

तीव्रत्रासप्रतिषेधः

त्रासास्तीव्रा हि कुर्वन्ति चित्तस्य विकृतिं भयात्
भयमेव तु चित्तस्य मानवानर्थमुच्यते २७

असाध्यलक्षणम्

प्रक्षिप्तचित्तो विचरेत् त्रास्यमानोऽपि शस्त्रतः
कुमारबृन्दानुगतस्तमसाध्यं विनिर्दिशेत् २८

दाहादि

तापनाञ्जननस्यैश्च क्षारैः क्षारागदैरपि
प्रोक्तैरपस्मारहरैरुन्मादं समुपाचरेत् २९
पुराणं पाययेच्चैनं सर्पिरुन्मादनाशनम्
स्थितं वर्षशतं श्रेष्ठं कुम्भसर्पिस्तदुच्यते ३०
पानाभ्यञ्जननस्येषु हितमुन्मादिनां सदा
काञ्जिकं लशुनं चैव बस्तमूत्रेण पेषयेत् ३१

उन्मादिनां प्रयोगोऽयं पुराणघृतसंयुतः
एताः क्रियाः प्रयुञ्जीत वैद्यः कायचिकित्सकः  ३२

दैवव्यपाश्रयचिकित्सा

शान्तिकर्माणि होमांश्च कुर्याद् भूतचिकित्सकः
इष्टयः शान्तिकर्माणि होमाः स्वस्त्ययनानि च
वेदोक्ताः कर्मविधयः कार्याश्चोन्मादनाशनाः  ३३
इत्याह भगवानात्रेयः

इति भेले चिकित्सिते अष्टमोऽध्यायः

नवमोऽध्यायः

अथातोऽपस्मारचिकित्सितं व्याख्यास्याम इति ह स्माह भगवानात्रेयः
उक्तं रूपं समुत्थानमपस्मारस्य कृत्स्नशः
निदानेषु चिकित्सां तु विस्तरेण निबोध मे  १

अपस्मारनिदानादि

गजाश्वयानात्पतनादभिघातात् भ्रमादपि
इष्टद्रव्यविनाशाच्च चित्तं विभ्रममृच्छति  २
तस्य चित्ते परिभ्रान्ते हृदयं परिशुष्यति
रुणद्धि वायुरूष्माणं नाडीं प्राप्य जलावहाम्  ३
भृशं तृष्णापरितः स मोहं गच्छत्यपस्मरन्
अपस्मरत्यपस्मारी फेनं मुञ्चति वेपते  ४

अपस्मारचिकित्सा

सेवेत तैलं शैरीषं घृतं कल्याणकं तथा
महापैशाचिकं वापि महात्क्षारं च दाधिकम्  ५

शणबीजादिचूर्णम्

शणबीजानि कैडर्यं कुलत्थ चापलूनकम्
रूपस्था च वयस्था च पूतना केशमारिणी ६
त्रिफला त्र्यूषणं मुस्ता लशुनं पापचेलिका
एतानि समभागानि वसातैलघृतानि च ७
ऊर्णकं च तथैकध्यं पचेद् गोमूत्रसंयुतम्
यदा प्रज्वलितं शान्तमथैनमवतारयेत् ८
बिडालपदमात्रं तु क्षारस्यास्य सुखाम्बुना
पिबेदपस्मारहरमुन्मादस्य च नाशनम्
अर्शांसि गुल्मान्मेहांश्च प्लीहानमुदरामयम् ९

दशमोऽध्यायः

अथातोऽतिसारचिकित्सितं व्याख्यास्याम इति ह स्माह
भगावानात्रेयः
भयाद्वा यदि शोकाद्वा योऽतिसारः प्रवर्तते

अतिसारे लङ्घनविधिः

अतिसारस्तु भूयिष्ठं साम एव स संभवेत्
तस्मात्सर्वमतीसारं लङ्घनैस्समुपाचरेत् १

दुर्बले विशेषविधिः

लङ्घयेद्बलवन्तं च
दीपनीयानि कारयेत्
दुर्बलस्य तु संसर्गीं कारयेत्तु विरिक्तवत् २

स्रंसनविधिः

स्तिमितं यस्य गुरु च पर्याध्मातमिवोदरम्

दीपनीयोपपपन्नं तु बहुदोषं तु देहिनम्  ३
स्तोकं स्तोकं स्रंसमानं निगृहीतं सवेदनम्
दीपनीयसमायुक्तं पाययेत्स्रंसनं परम्  ४
विशुद्धस्रोतसस्तस्य दोषेषु स्रंसितेषु च
सुखं तद्ग्रहणं कर्तुं पाचनं स्तम्भ एव च  ५

आमश्लेष्मातीसारचिकित्सा

हरीतकीं त्रिकटुकं हिङ्गु सौवर्चलं वचाम्
शुक्लामतिविषां चैव पाययेदुष्णवारिणा  ६
नियतं जनिताध्मानमतिसारं सवेदनम्
स्थापयत्यतिसंवृद्धं वेलेव वरुणालयम्  ७
हरीतकी सातिविषा हिङ्गु सौवर्चलं वचा
सैन्धवं चेति पिष्टानि पाययेदुष्णवारिणा  ८
आमातिसारे योगोऽयं विधितस्तु चिकित्सकैः
युक्ते क्वाथे प्रयोक्तव्यो वैद्येनापि यशोऽर्थिना  ९
आमातिसारो यो ह्याभ्यां योगाभ्यां न निवर्तते
न स साधयितुं शक्यो ह्यन्यैर्मार्गशतैरपि  १०
भूयिष्ठमामप्रभवः कुक्षिरोगः कफात्मकः
प्रवर्तते नृणां तस्य शृणु सम्यक् चिकित्सितम्  ११
चित्रकः पिप्पलीमूलं वचा कटुकरोहिणी
पाठा वत्सकबीजानि हरीतक्यो महौषधम्   १२
एतदामसमुत्थानमतिसारं सवेदनम्
कफात्मकं सपित्तं च वर्चो बध्नाति च ध्रुवम्  १३
पाठा वचा त्रिकटुकं कुष्ठं कटुकरोहिणी
तत् साधुपीतान्येतानि श्लेष्मातीसारनाशनम्  १४
भल्लातकं शक्रयवाः पाठा कटुकरोहिणी

यवान्यजाजीकुष्ठं च चित्रकोऽतिविषा वचा १५
शटी पुष्करमूलं च तथा हिङ्गु हरीतकी
सौवर्चलं शृङ्गवेरं गवां मूत्रेण पेषयेत् १६
वटकानक्षमात्रांस्तान् छायाशुष्कान्निधापयेत्
तेषामेकं पिबेद्द्वौ वा सुखोष्णेनैव वारिणा १७
एतद्ध्यामसमुत्थानमतिसारं सवेदनम्
नुदत्यर्शांसि च तथा तमांसीव दिवाकरः १८
ग्रहणीदीपनीयाश्च ये योगाः परिकीर्तिताः
श्लेष्मातिसारे ते कार्याः क्षारः क्षारगुडस्तथा १९
एतदामातिसाराणां श्लेष्मातीसारिणामपि
चिकित्सितं समाख्यातं पित्तातीसारिणां शृणु २०

पित्तातिसारचिकित्सा

अतिसारस्तु यः पित्तादुत्थोऽतिसरतीह सः
पाचितं स्तम्भयेदेनं यथावत्तन्निबोध मे २१
बिडं बिल्वशलाटूनि तिन्त्रिणीकं सदाडिमम्
सौवर्चलं धातकी च समङ्गा चेति तत्समम् २२
कल्कपिष्टं भवेत्पेयं काल्यमुष्णेन वारिणा
पित्तातीसारशूलार्तं नरं सद्यश्चिकित्सते २३
रसाञ्जनं सातिविषं कुटजस्य फलं त्वचम्
धातकीं शृङ्गबेरं च पाययेत्तण्डुलाम्बुना २४
माक्षीवयुक्तो नुदति पित्तातीसारमुल्बणम्
मन्दं दीपयते चाग्निं शूलं चाशु निवर्तयेत् २५
पाठा दारुहरिद्रा च पिप्पलीमूलमेव च
फलत्वचे वत्सकस्य शृङ्गबेरं तथैव च २६
एतानि कल्कपेष्याणि पाययेत्तण्डुलाम्बुना

अम्बष्ठकी शिलोद्भेदं धातकी चाम्लवेतसम् २७
उशीरं बालहीबेरं दाडिमत्वङ्ग महौषधम्
जम्बूफलं कपित्थस्य मध्यं बिल्वशलाटु च २८
एतानि चैव तुल्यानि पाययेत्तगडुलाम्बुना
माक्षीकयुक्तं नुदति पित्तातीसारलक्षणम् २९
सवातां च समूलां च नाशयेत्परिकर्तिकाम्
समङ्गा निचुलं लोध्रं धातकी मधुकं तथा ३०
बटलोध्रप्रवालाश्च दाडिमस्य फलं त्वचम्
माषपर्णीशिलोद्भेदं साम्बष्ठाकमथापि च ३१
पित्तातिसारे दातव्यं तगडुलोदकसंयुतम्
समङ्गा धातकीपुष्पं साम्बष्ठाकमथापि च ३२
पित्तातिसारे पद्मं च तगडुलाद्भिः पिबेन्नरः
शशस्यैणस्य वा रक्तं मधुकं कृष्णमृत्तिका ३३
पित्तातिसारे दातव्यं तगडुलोदकसंयुतम्

### रक्तातिसारपरिचयः

दुष्टः पित्तातिसारस्तु गम्भीरस्थानमाश्रितः ३४
अतीव सार्यते रक्तमतिसारस्स रक्तजः

### रक्तातिसारचिकित्सा

नीलोत्पलं बिल्वतिला मधुकं गुडशर्करा ३५
केसरं पुगडरीकस्य कुमुदं क्षौद्रमेव च
आजेन पयसा पीतं रक्तातीसारनाशनम् ३६
निर्वाहि ---

### पुरीषक्षये उपक्रमः

अथास्य वर्चोजननीमनुयुक्तिं प्रदापयेत्

दीप्ताग्निक्षीणमांसस्य सशूलस्यातिसारिणः ३७
अजस्य महतो मध्याद्द्विशवारं सशोणितम्
दध्नाथ यावके सिद्धं गुडत्रिकटुकान्वितम् ३८
तेन संभोजयेत्काले मृदुसुस्विन्नदेहिनम्
कल्पेनैतेन वाराहं क्रौञ्चं मांसञ्च कारयेत् ३९
एतेनैव च कल्पेन कारयेच्चरणायुधान्
तित्तिरीन् कच्छपान् लाभान्मयूरान्क्रकरानपि ४०
वातातिसारिणामेतत्समाख्यातं चिकित्सितम्

वातातिसारेऽर्शश्चिकित्सितातिदेशः

वातातिसारे कर्तव्यं सर्वमर्शश्चिकित्सितम् ४१

भयशोकजातिसारचिकित्सा

भयाद्वा यदि वा शोकाद्योऽतिसारः प्रवर्तते
यः कुप्यति ततो दोषस्तस्य कुर्याच्चिकित्सितम् ४२
नित्यमाश्वासयेयुस्तं सुहृदश्च विपश्चितः
मनः प्रहृष्टं कुर्याच्च तदा सम्पद्यते सुखी ४३

असाध्यलक्षणम्

सर्वगात्रपरिस्तब्धो विवर्णः स्तिमितश्च यः
न च दुःखं विजानीते परिवर्ज्यस्तथाविधः ४४
यस्य केशाः प्रलुष्यन्ते बलं वर्णश्च हीयते
परिशुष्कमुखो यश्च न स जीवति तद्विधः ४५
विचेष्टमानो यश्शेते सर्वगात्राणि विक्षिपेत्
स्तब्धगात्रो न संचारी परिवर्ज्यस्तथाविधः ४६
हनुं दशति योऽभीक्ष्णं न वेदयति योऽसुखम्
जिह्वां खादति चात्यर्थं गतायुरिति निर्दिशेत् ४७

संरक्षन्वै यशः प्राज्ञो न चैनं समुपाचरेत्
अर्थघ्नं च यशोघ्नं च न कर्म समुपाचरेत् ४८
दृष्ट्वा साध्यमसाध्यं च यः करोति स सिध्यति
पूजां च लभतेऽत्यर्थं विद्वत्सु च विराजते ४९

विषूची

विषूच्यास्तु प्रवक्ष्यामि चिकित्सां लक्षणानि च
विरुद्धगुरुपिष्टान्नशाकरूक्षरसाशिनाम् ५०
अजीर्णभोजिनां नित्यं त्रयः कुप्यन्ति धातवः
तद्दोषबलमुद्भूतमारुतेन विवर्धितम् ५१
अधश्चोर्ध्वं च तिर्यक् च स्रोतांसि निरुणद्धयति
रुद्धैश्च मारुते रुद्धस्रोतांसि निरुणद्धि च ५२
तेषु दोषपरीतेषु दुष्टेनान्नरसेन च
ऊर्ध्वं चाधश्च वेगोऽस्य कथंचित्संप्रवर्तते ५३

विलम्बिका

तां विलम्बीं विगर्हन्ति विषकल्पां विषूचीकाम्

अलसः

यथापथोत्पन्नरसो देहेषु विषमाश्रितः ५४
नाडीस्स व्याकुलीकृत्य वर्धयेत्तु बलासकम्
तस्य कासो ज्वरो मूर्छा भक्तद्वेषो विवर्णता ५५
ग्लानिश्चैवाविपाकश्च श्लेष्मसेकः प्रवाहिका
उरोघातस्तथात्यर्थं हृद्रोगश्चान्त्रकूजनम् ५६
विबन्धो गात्रहानिश्च सोऽलसो नाम दारुणः

विषूचीपूर्वरूपाणि

उत्क्लेशो वेपथुश्छर्दिर्विदाहो वेष्टनं ज्वरः ५७

श्वासाध्मानं शकृद्भेदो विद्विष्टाहारलक्षणम्
श्लेष्मप्रचुरकासश्च जृम्भणं हृदयग्रहः ५८
तथा श्वासश्च कासश्च पार्श्वशीर्षरुजान्वितः
विषूच्याः पूर्वरूपाणि स्वेदो गात्रस्य शीतता ५९

अन्नविभ्रमलक्षणम्

उद्गारो गुरुकोष्ठत्वं मूत्रानिलशकृद्ग्रहः
एतत्पञ्चविधं प्रोक्तमन्नविभ्रमलक्षणम् ६०

आमातिसारचिकित्सातिदेशः

चिकित्सां तत्र कुर्वीत सर्वामामातिसारिणाम्

उपद्रवचिकित्सा

उपद्रवाश्च ये प्रोक्ताः विषूच्यामलसे तथा ६१
तांश्चिकित्सेद्भिषक् सम्यग्यथास्वैश्च चिकित्सितैः
एतद्विषूच्यामाख्यातं समासेन चिकित्सितम् ६२

विस्तरेण चिकित्सा

क्रूरत्वादस्य रोगस्य भूयो वक्ष्यामि विस्तरम्
विषूच्याः पूर्वरूपाणि संनिशम्य चिकित्सकः ६३
वमनं कारयेत्क्षिप्रमुष्णेन लवणाम्बुना
यावत्स तिष्ठेत्तस्य स्यान्नान्यदुद्धरणात्सुखम् ६४
कारकं च कषायं स्यादथवार्जुनसाधितम्
पीतं कषायं वमनं सद्यो हन्ति विषूचिकाम् ६५
तथा मुस्तादिकः कल्कः पिप्पलीकल्कसंयुतः
पीतश्चोष्णेन तोयेन हन्यात्क्षिप्रं विषूचिकाम् ६६
विरुद्धा हि रसा भुक्ता दूषिताः पवनादिभिः
विषीभवन्ति देहेषु पूर्ववृद्धैर्मलाशये ६७

तस्माद्विषसमा ह्याशु क्रियास्सर्वाः ह्प्रयोजयेत्
धूमान् कषायान् वर्तींश्च प्रदेहोत्सादनानि च ६८
अवपीडान् प्रधमनमग्निकर्मोपनाहनम्
संस्पर्शान्युपचारांश्च विषूच्यां कारयेत्क्रियाम् ६९

शिवावर्तिः

भल्लातकं त्रिकटुकं पूतिकं त्ववकं बलाम्
फणिज्जं लशुनं कुष्ठं करञ्जस्य फलानि च ७०
त्रिफलां च यवानीं च कुटजस्य फलानि च
वर्तिमेतां शिवां नाम बस्तमूत्रेण पेषयेत् ७१
विषूचलात्त्वात्त्वारश्च जायते ---

अर्दितलक्षणम्

हनुभ्यां निगृहीताभ्यामव्यक्तं व्याहरत्यपि
सुसंहतहनुर्वापि न व्याहरति किंचन १

अर्दितचिकित्सा

स्नेहपानानि नस्यं च स्वेदाः पथ्याशनानि च
उपनाहश्च शस्यन्ते बस्तयश्चार्दिते हिताः २
दध्यारनालयोर्द्रोणे वसा लाभेन चाढके
आनूपौदकनित्यानां मांसान्यपि च लाभतः ३
तिलान् कुलुत्थान्माषांश्च बदराणि यवान् बलाम्
द्वे पञ्चमूल्यौ रास्नां च शतमूलां शतावरीम् ४
एतत्सर्वं समाहृत्य साधयेन्मृदुनाग्निना
बाष्पेणोच्चरता तेन नाडीस्वेदेन स्वेदयेत् ५
तैलमेभिश्च विपचेदभ्यञ्ज्याच्च पिबेच्च तत्
एतमेव च सम्भारमुपनाहं च कारयेत् ६

यच्चिकित्सितमाख्यातं वातव्याधिविनाशनम्
तदेव सर्वं निखिलमर्दितेष्वपि कारयेत् ७
महास्नेहं बलातैलं तैलं शैरीषमेव वा
पानाभ्यङ्गेषु नस्येषु बस्तौ वापि प्रयोजयेत् ८
आनूपानि च मांसानि वेशवारं प्रकुट्टयेत्
नातिस्निग्धेन तेनास्य कारयेदुपनाहनम् ९

श्लेष्मोपष्टब्धार्दितम्

श्लेष्मणा समुपस्तब्धो यस्येह पवनो भवेत्
मन्ययोर्मूर्ध्नि गण्डे च शोषस्तस्योपजायते १०
मूको निद्रापरीतश्च कण्ठनिश्वसितो भृशम्
भृशं लालापरीतश्च जिह्मजिह्वीकृतो नरः ११
श्लेष्मोपष्टब्धमेतादृगर्दितं परिकीर्तितम्

श्लेष्मोपष्टब्धार्दितचिकित्सा

तस्यानुवासनं कुर्यात्तथा शीर्षविरेचनम् १२
तिल्वकेन विरेक्तव्यो भवेद् बिन्दुघृतेन वा
पुराणं वा पिबेत्सर्पिर्धूमं तीक्ष्णं पिबेत्तथा १३
श्लेष्मण्युपरते तस्य बृंहणैः समुपक्रमः
वातव्याधिचिकित्सां च यथोक्तां समुपाचरेत् १४
स्थानस्थस्तत्र च कफः वायुरागन्तुरुच्यते
तस्मात्तयोर्गतिं दृष्ट्वा वातघ्नीं कारयेत्क्रियाम् १५
इत्याह भगवानात्रेयः

इति भेले दशमोऽध्यायः

## एकादशोऽध्यायः

अथातो ग्रहणीचिकित्सां व्याख्यास्याम इति ह स्माह भगवानात्रेयः

### अग्निमूलमायुः

अग्निर्वाऽऽयुर्मनुष्याणां प्राणास्तत्र प्रतिष्ठिताः
बलमारोग्यमायुश्च सुखदुःखं तदाश्रयम् १
म्रियते ह्युपशान्तेऽग्नौ युक्ते चोष्मणि जीवति
तस्मात्प्राणायुषी विद्यादग्निमूले शरीरिणाम् २

### अग्नेः कर्म

सोऽग्निस्तमुचितं भुक्तं रसाय वितनोत्यधः
तेनेन्द्रियबलं पुष्टिं वर्णञ्च लभते नरः ३
चतुर्विधं पचत्यग्निः समं तीक्ष्णं तथा मृदु
विषमं चेति तेषां तु यः समोऽग्निः स शस्यते ४

### ग्रहणीदोषनिदानम्

भजतां गुरु रूक्षं च दिवास्वप्नं च नित्यशः
रात्रौ न वा संस्वपतां तथा वेगविधारिणाम् ५
अध्यश्नतामजीर्णेऽन्ने ह्यतिस्नेहे विरेकिणाम्
ज्वरान्मद्यप्रसङ्गाच्च तथासात्म्यनिषेवणात् ६
मधुरक्षीरनित्यानां तथा जलविहारिणाम्
पिष्टान्नदधिशाकानामहृद्यानां निषेवणात् ७
ईदृशैर्ग्रहणी जन्तोर्दूष्यतेऽति निषेवितैः
मन्दा तीक्ष्णातिविषमा त्रिविधं सा प्रकुप्यति ८

### ग्रहणीदोषजा रोगाः

तथा रोगाः प्रवर्तन्ते ग्रहणीदोषजा नृणाम्
ज्वरः कासः पाण्डुरोगः श्वयथुः परिकर्तिका ९

अरुचिश्चाविपाकश्च गुल्मार्शांसि भगन्दरम्
अतिसारश्च कुष्ठं च शूलान्यलसको भ्रमः १०
एतांश्चान्यांश्च जनयेद्रोगानस्यामिताशिनः
ग्रहणी दूषिता जन्तोः सामा रोगान्निहन्ति वा ११

मन्दाग्निः

यस्याक्रान्ते हि कायाग्नौ श्लेष्मणा मधुराशिनः
न पच्यतेऽन्नं कालेन स मन्दाग्निरिति स्मृतः १२
अग्नौ मन्दे कफेनास्य शीघ्रं भुक्तं न पच्यते
स भूयो मृदुतां याति गुरुभोजनदूषितः १३

विषमाग्निः

एवं रूपश्च वृद्धश्च कफे तस्य प्रशाम्यति
एवं स विषमो नाम ग्रहणीदोष उच्यते १४

अत्यग्निः

अग्निस्सोमक्षयाद्यस्य भृशं देहे प्रकुप्यति
भुक्तं भुक्तं जरयते न च वर्णबलाय च १५
भुक्ते भुक्ते क्षुधाऽप्यस्य जायते न च पुष्यति
अत्यग्निरिति तं विद्यात्स च दुःखतमः स्मृतः १६
इत्येष रोगस्त्रिविधः ग्रहणीसंश्रितो मया
प्रोक्तस्तस्य चिकित्सां तु विस्तरेण निबोध मे १७

ग्रहणीचिकित्सा

धान्वन्तरं पिबेत्सर्पिः प्राजापत्यमथापि वा
ततोऽस्मै वमनं दद्यात्ततश्चोर्ध्वं विरेचनम् १८
पिप्पलीवर्धमानं वा पिबेत्क्षारागदानपि
तक्रं मासं पिबेच्चापि गण्डीरारिष्टमेव वा १९

दाधिकं च पिबेत्सर्पिस्तैलं शैरीषमेव वा
महद्यत्पञ्चगव्यं वा --- २०
इत्याह भगवानात्रेयः

इति भेले एकादशोऽध्यायः

## द्वादशोऽध्यायः

अथातो मूत्रकृच्छ्रचिकित्सां व्याख्यास्याम इति ह स्माह भगवानात्रेयः

### मूत्रकृच्छ्रचिकित्सा

तालपत्रीकषायं तु मूत्राघातेषु दापयेत्
भोजनं क्रौञ्चमांसेन मूत्राघातेषु शस्यते १
पिष्ट्वा तु तस्य चैवास्थि क्षीरेण सह पाययेत्
मूत्रकृच्छ्राणि शमयेदश्मरीं च भिनत्त्यपि २

### शकरोद्धरणविधिः

एभिर्यदि प्रयोगैस्तु शर्करा नोपशाम्यति
तामुद्धरेच्छल्यहर्ता दृष्टकर्मा बहुश्रुतः ३

### शुक्राश्मरीकृच्छ्रचिकित्सा

प्रतीघातादिन्द्रियस्य यस्य कृच्छ्रं प्रवर्तते
अनुसन्नं च शूलं च शृणु तस्य चिकित्सितम् ४
बलातैलेन स्वभ्यक्तमुष्णाम्बुपरिषेचितम्
आस्थापयेत्पाचनेन मुस्ताद्येन तु बस्तिना ५
प्रत्यागते निरूहे तं भोजयेत्सिद्धमोदनम्
तनुना मुद्गयूषेण जाङ्गलेन रसेन वा ६
ततस्तु शुद्धाम्बरया नार्या स्नातानुलिप्तया

इष्टया संविशेत्सार्धं कल्याणगुणयुक्तया ७
विशुद्धे रेतसो मार्गे मारुतः प्रगुणी भवेत्
स्वं स्थानं मारुते प्राप्ते कृच्छ्रं तस्य निवर्तते ८

उपसंहारः

अष्टानां मूत्रकृच्छ्राणामेतदुक्तं चिकित्सितम्
रूपाणि चैव सर्वेषां शिष्याणामर्थसिद्धये ९
इत्याह भगवानात्रेयः

इति भेले द्वादशोऽध्यायः

त्रयोदशोऽध्यायः

अथात उदरचिकित्सां व्याख्यास्याम इति ह स्माह भगवानात्रेयः

वातोदरनिदानम्

भाराभिहतदेहस्य कटुतिक्तोपसेविनः
वायुस्सर्वशरीरस्थो दुष्टो वातहताः सिराः १
गत्वा हि पूरयेत्कोष्ठं तथाध्मानं करोति च
दृतिवच्च समुन्नद्धमुदरं स्यात्समन्ततः २
कृष्णराजीऽवनद्धं च कृष्णरोमाचितं तथा
एतद्वातोदरं विद्यादेतैर्लिङ्गैस्समन्वितम् ३

पित्तोदरनिदानम्

उष्णाभितप्तो यो जन्तुर्विदाहीन्युपसेवते
पित्तं तस्य शरीरस्थं दुष्टं पित्तहताः सिराः ४
सम्प्राप्य पूरयेत्कोष्ठं तथाध्मानं करोति च
दृति बस्त्यात्समुन्नद्धमुदरं तत्समन्ततः ५
स्विन्नं क्लिन्नं मृदुस्पर्शं क्षिप्रपाकं तथैव च

पीतराजिसिराबद्धं पीतरोम समाचितम्  ६
भवन्ति ज्वरतृड्दाहातीसारकटुकास्यताः
विद्यात्पित्तोदरं चैतत् पित्तलिङ्गैः समन्वितम्  ७

श्लेष्मोदरनिदानम्

योऽत्यन्तं मधुर स्निग्धपिच्छिलानि निषेवते
व्यायामोपरतश्चैव क्लान्तो यश्चोदकं पिबेत्  ४
तस्य देहे कफो दुष्टः सिराः कफवहा गतः
उत्सन्नो दूषितश्चापि कोष्ठमभ्यन्तराश्रितः  ५
सर्वमाध्यमापयेत्कोष्ठं वेदनां च करोति सः
शुक्लराजीऽवनद्धं च शुक्लरोमाचितं तथा  ६
तस्य सीदन्ति गात्राणि मुखस्त्रावश्च जायते
दुर्गन्धितास्यमालस्यं सकफोदरिलक्षणम्  ७

सन्निपातोदरनिदानम्

समश्नतः सर्वरसान् मिथ्याहारविहारिणः
तस्यान्यार्धमिवात्यर्थमुदरं संप्रकाशते  ८
नानाराजीऽवनद्धं च नानारोमाचितं तथा
तथा नानावेदनाढ्यमुदरं सान्निपातिकम्  ९

दूष्योदरनिदानम्

आमनन्त्युदरं नार्यो गरमात्मोद्भवं यदा
कर्णरोधकृतं चापि शुक्लं जिह्वामलं नखम्  १०
मनुष्यमेदोरोमाणि स्त्रीणामार्तवशोणितम्
पुरीषं च प्रयच्छन्ति भक्ते दुष्टोदरं भवेत्  ११
सर्ववर्णसिरानद्धं नीलपीतप्रभं तथा
नृणां दूष्योदरं नाम जायते सान्निपातिकम्  १२

तस्याङ्गमर्दः कासश्च श्वासो हिक्का च जायते
निद्रा तन्द्रा तथालस्य दाहश्चाङ्गगतो भवेत् १३
सदनं सर्वगात्राणां शोषणं पाण्डुवर्णता
विषपीते च यल्लिङ्गं तच्च तस्योपजायते १४
एवं दूष्योदरं त्वेतैर्लिङ्गैर्मरणमृच्छति

उदकोदरनिदानम्

अभुक्त्वा यः पिबेन्नित्यमुदकं प्रातरुत्थितः १५
वर्षाहेमन्तकालेषु पिबेद्यश्चोदकं बहु
तस्योदरेऽधिका पीडा चान्यतः सम्प्रपद्यते १६
सदनं रोमहर्षश्च शीताग्नित्वं शिरोग्रहः
तथा स्निग्धावभासञ्च स्निग्धरोमाचितं च यत् १७
एतैर्लिङ्गैस्समस्तैस्तु नृणां तदुदकोदरम्

क्षतोदरनिदानम्

शङ्कुना स्नायुभेदेन मत्स्यानां वाथ कण्टकैः १८
शकृत्तृणाग्रैर्वा भुक्तैरन्त्रं यस्य विभिद्यते
तेनान्नपानं छिद्रेण स्रवेत्तस्यान्तरोदरे १९
उन्नतं जायते तस्मादुदरं स्यात्समन्ततः
सिराऽयता जायते च त्वर्धे जठरसन्निधौ २०
संस्राविणि च जठरे लक्षणं परिकीर्तितम्

बद्धोदरनिदानम्

यः प्लवेल्लङ्घयेद्वापि यश्च व्यायच्छते नरः २१
तेनास्यान्त्राणि तुद्यन्ते बध्यन्ते चाप्यथैकतः
तथा मुञ्जैश्च बालैश्च भुक्तैरन्त्रं निवेष्टयते २२
तेन बद्धं गुदं नृणां जायतेऽन्त्रनिपीडनात्

उत्क्षिप्तकुक्षिर्भवति तथा संक्षिप्तमेहनः २३
शूनाक्षः शूनवृषणः शूनहस्तस्तथैव च
शूनपादगुदश्चैव सुप्ताङ्गश्चापि जायते २४
नतोन्नतः समश्चापि नरो बद्धोदरी भवेत्

प्लीहोदरनिदानम्

आमधान्ययवान् यस्तु नरो भुङ्क्ते निषेवते २५
सकेसरं फलं वापि भक्षयित्वोदकं पिबेत्
हस्त्यश्वरथयानं च भुक्तमात्रे निषेवते २६
तस्याभिवर्द्धते प्लीहा पृथक् तदुपदेक्ष्यते

सुवर्णसमकचूर्णम्

महौषधं समरिचं द्वौ क्षारो त्रिफला वचा
यवानी कुञ्चिका हिङ्गु तिन्त्रिणीकाम्लवेतसौ २७
धान्याजगन्धे त्रायन्ती दाडिमं सयवासकम्
कटुका कौटजं बीजं सैन्धवं च समान् भिषक् २८
त्रिवृता सप्तला दन्ती कम्पिल्लं नीलिकाऽभया
सुवर्णक्षीरी द्विगुणं सर्वाण्येतानि चूर्णयेत् २९
आजे गव्येऽथवा मूत्रे सप्ताहं परिभाव्य तम्
द्विगुणं शर्करां चात्र दापयेत्त्र्यङ्गुलं पिबेत् ३०
गोमूत्रत्रिफलाक्षाररसैर्मद्यैः सुखाम्बुना
सुवर्णसमकं चूर्णं सर्वरोगार्तिभेषजम् ३१
सर्वोदरप्लीहशोषगुल्महृद्रोगनाशनम्
वाताष्ठीलामथानाहः श्वयथुं सर्वगात्रजम् ३२
हलीमकामिलापाण्डुप्रमेहान् सज्वरान् जयेत्

सर्पविषप्रयोगः

जीविते संशयं कृत्वा गरलं जठरी पिबेत् ३३
त्रपुसोर्वारुकं वापि मूलकं वापि दंशयेत्
क्रुद्धेन कृष्णसर्पेण जठरी तानि भक्षयेत् ३४

छिद्रोदरे शस्त्रचिकित्सा

कुक्षिं विपाट्यमानेन छिद्रमन्त्रस्य वीक्ष्य च
ततः पिपीलिकादंशं छिद्रे त्वन्त्रस्य दापयेत् ३५
अन्त्रच्छिद्रे संगृहीते सीव्येत्कुक्षिं ततो भिषक्
एवं छिद्रोदरं वैद्यः शल्यकर्तुरुपाचरेत् ३६

बद्धोदरे शस्त्रचिकित्सा

तथा बद्धगुदं चैव पाटयेच्छल्यशास्त्रवित्
मुञ्जान् वालांस्तथोद्धृत्य बद्धं सीव्येत्ततो भिषक् ३७

उदकोदरचिकित्सा

दकवन्ति हि सर्वाणि जठराण्यक्रियावताम्
व्यधनं तेषु कुर्वीत शल्यकर्तुः प्रयोगवित् ३८
वामे पार्श्वे त्वधः कुक्षेर्मुक्त्वा च चतुरङ्गुलम्
नाभ्यां वा प्रणयेच्छस्त्रं मात्रायुक्तं चिकित्सकः ३९
विस्रावयेच्च जठरं भिषगामयपीडितम्
मर्दयेदुदरं चास्य वेष्टनेन तु वेष्टयेत् ४०
वेष्टितं जठरं चास्य नाध्मापयति मारुतः

यवाग्वाद्याहारयन्त्रणाः

पिबेद्यवागूं च ततो लवणस्नेहवर्जिताम् ४१
ततः परं तु क्षीरेण मासार्धं समुपाचरेत्
ततः क्षीरयवागूं च त्रीन्मासांस्तु यवान्भिषक् ४२
भुञ्जीतालवणं तस्मान्त्रीन्मासान् लघु भोजनम्

ततः सलवणं भोज्यमुच्यते तूदरेऽपि च ४३
के तूदराणामिच्छन्ति लवणं योगवाहतः

उदरे अग्निकर्म

केचित्तु जठरे प्राहुरग्निकर्म चिकित्सकाः ४४
अजाततोये जठरे पवनश्लेष्मसम्भवे

प्लीहोदरेऽग्निकर्म

प्लीहोदरं हिनस्त्यग्निः जयेत्तस्माद्विशेषतः ४५
निवृत्तिर्वर्णिता तत्र सलिलोदरस्वेदिनः

उदकसम्भवलक्षणम्

--- यावत्पेया प्रकोदरम् ४६
मण्डलं निर्मितं यच्च श्वयथुः स्पर्शने मृदुः
आकोठितमशब्दं च न च राजिसमाकुलम् ४७
आक्रम्यमाणं नाभ्यान्तु मृदुरेव हि सर्पति
ततश्च सलिलोद्भूतिं पच्छनैश्च विनिर्दिशेत्
क्रियायतीश्च सर्वाणि सक्रियापिश्च देहिनाम् ४८

भल्लातकयोगः

भल्लातकानां पवनाहतानां वृन्तच्युतानामिह चाढकं स्यात्
तदिष्टिकाचूर्णकणैर्विघृष्य प्रक्षालयित्वा विसृजेत् प्रवाते ४९
शुष्कं पुनस्तद्विदलीकृतं च विनिक्षिपेदप्सु चतुर्गुणासु
पादावशिष्टं परिपूतशीतं क्षीरेण तुल्येन पुनः पचेत ५०
तदर्धया शर्करयावगाढं लोहाभयाव्योषकचूर्णयुक्तम्
एतत्समं शर्करपादयुक्तं ततः खजेनोन्मथितं निधाय ५१
प्रस्थद्वयेनामलकीमधूनां शीतेऽथ धान्येन पुनः पचेत
तत्सप्तरात्रादुपजातवीर्यं सुधारसादप्यधिकत्वमेति ५२

प्रातर्विशुद्धीकृतदेहभाजां मात्रां ददीतात्मशरीरयोग्याम्
न चान्नपाने परिहार्यमस्ति न चोष्मवाताध्वनि मैथुने च ५३
जन्तुर्नितान्तं नरसिंहवत्स्याद्भवेन्नरः काञ्चनराशिसारः
दन्ताश्च शीर्णाः पुनरुद्भवन्ति केशाश्च शुक्लाः पुनरेव कृष्णाः ५४
विशीर्णकर्णाङ्गुलिनासिकोऽपि कृतान्तदन्तान्तगतोऽपि कुष्ठी
सोऽपि क्रमेणाङ्गुलिगात्रशाखस्तरुर्यथा रोहति वारिसिक्तः ५५
महामयूराञ्जयति स्वरेण बलेन नागांस्तुरगाञ्जवेन
स्मृतिमतिबलमसत्य ---- ॥

इति भेले त्रयोदशोऽध्यायः

## चतुर्दशोऽध्यायः

अथात ऊरुस्तम्भ चिकित्सा व्याख्यास्याम इति ह स्माह भगवानात्रेयः

### ऊरुस्तम्भे वंशकादिप्रयोगः

वंशको नक्तमालश्च मूर्वा कटुकरोहिणी
तर्कारी प्रग्रहश्चैव पीलूनि निचुलानि च १
असनः सप्तपर्णश्च त्रिफला मरिचानि च
एतानि समभागानि कषायमुपपादयेत् २
एतान्येव च चूर्णानि माक्षिकेण पिबेन्नरः
अनेनैव कषायेण भोजयेत्सिद्धमोदनम् ३

### पिचुमन्दाद्युद्धर्तनम्

पिचुमन्दस्य मूलानि चित्रको हस्तिपिप्पली
त्वक्पत्रफलमूलानि करञ्जात्सर्षपास्तथा ४
तुल्यान्येतानि सर्वाणि वल्मीकस्य च मृत्तिका

गवां मूत्रेण पिष्टानि श्लक्ष्णान्युद्वर्तनं वरम् ५

रास्नाद्युद्वर्तनम्

रास्ना वचा ह्यर्कमूलं हिंस्रा दन्ती तथैव च
शतपुष्पा च कुष्ठं च द्वे हरिद्रे पुनर्नवा ६
अश्वमूत्री त्वपामार्गः शारिवा नक्तमालिका
वल्मीकमृत्तिका युक्तमेतैरुद्वर्तनं वरम् ७

करंजादिसेकलेपौ

करंजस्सुरसो बिल्वं देवदारु वचार्जुनः
तर्करी मेषशृङ्गी च शोभाञ्जनक आरणी ८
उभे बृहत्यौ श्योनाकः श्वदंष्ट्रा खदिरासनौ
जले सिद्धैरिमैस्तुल्यैः कषायपरिषेचनम् ९
एतैरेवौषधैस्तुल्यैः क्षीरपिष्टं प्रलेपयेत्
अनेन विधिना शीघ्रमूरुस्तम्भः प्रशाम्यति १०

दशमूलादितैलम्

द्वे पञ्चमूल्यौ त्रिफला चित्रको देवदारु च
एकाष्ठीला त्वपामार्गः श्रेयसी वायसी सुधा ११
काला भार्ङ्गी पृथक्पर्णी सुवहा मदयन्तिका
काश्मरी च विशल्या च हिंस्रा हेम विदारिका १२
चिरबिल्वो ह्यशोकश्च बला चांशुमती तथा
वयःस्था पीलुपर्णी च पाठा चैव शतावरी १३
एषां पंचपलान् भागान् जलद्रोणेषु सप्तसु
अष्टभागावशेषं च पचेत्तैलाढकं शनैः १४
कुष्ठं च शतपुष्पा च चित्रकस्त्र्यूषणं तथा
देवदार्वगरु श्रेष्ठं विडङ्गं मुस्तमेव च १५

अश्वगन्धा च पाठा च मूर्वा श्योनाक एव च
पिप्पल्यः शृङ्गबेरं च दन्ती हिङ्ग्वम्लवेतसौ २६
गर्भेणानेन वैद्यस्तु कषायेण सुसाधयेत्
सिद्धं पूतं च शीतं च क्षौद्राज्येनानुसंसृजेत् १७
तदस्य दद्यात्पानार्थं तथैवाभ्यञ्जनादिषु
ऊरुस्तम्भश्चिरोत्पन्नस्तैलेनैतेन शाम्यति १८
श्लीपदान्याढ्यवातं च खुडवातांश्च नाशयेत्

पिप्पलीवर्धमानादिप्रयोगविधिः

पिप्पलीवर्धमानं वा माक्षिकेण जलेन वा १९
ऊरुस्तम्भे प्रशंसन्ति गण्डीरारिष्टमेव वा
क्षाराः क्षारागदाश्चैव निरूहाश्च पृथग्विधाः २०
हरीतक्याः प्रयोगो वा ह्यूरुस्तम्भे प्रशस्यते

भोजनविधिः

विलेख्यमानो हि यतः क्षीणमांसबलो भवेत् २१
शरीररक्षणार्थाय भोजयेद् बृंहयेदपि
भुञ्जीत षष्टिकान् जीर्णान् पुराणांश्चैव शालिकान् २२
जाङ्गलानि च मांसानि सेवेत मृगपक्षिणाम्
ऊरुस्तम्भपरीतो यो यदा वाताधिको भवेत् २३
सम्यक् प्रोक्तमिदं सर्वमूरुस्तम्भचिकित्सितम् २४
इत्याह भगवानात्रेयः

इति भेले चतुर्दशोऽध्यायः

पञ्चदशोऽध्यायः

अथातो विसर्पवातशोणितं व्याख्यास्याम इति ह स्माह

भगवानात्रेयः

विसर्पभेदाः

वातात्पित्तात्कफाच्चैव सन्निपाताद्द्वयादपि
विसर्पाः पञ्च निर्दिष्टास्तेषां वक्ष्यामि लक्षणम्  १

वातविसर्पनिदानम्

कषायकटुरूक्षांश्च यो नित्यमुपसेवते
तस्य वायुः प्रकुपितः त्वग्रक्तं मांसमेव च  २
सिराश्च समधिष्ठाय विसर्पं जनयेद्बली
पिपीलिकां विसर्पन्तीं मन्यते तु घृतेऽपि च  ३
जृम्भिका तालुशोषश्च पार्श्वशूलग्रहज्वराः
घोरश्चारुणवर्णाभः श्वयथुः कृष्ण एव च  ४

वातवीसर्पचिकित्सा

तस्य कर्मविधिं शृणु
तस्य निर्वापणं कुर्यात्क्षीरेण परिषेचनम्  ५
पीत्वा च तैल्वकं सर्पिर्हरीतक्या विरेचनम्
अविदाहीनि चान्नानि भोजनार्थं प्रदापयेत्  ६
क्षीरं च यवचूर्णं च घृतं चैवात्र साधयेत्
यष्टीमधुकसंयुक्तमेतदालेपनं वरम्  ७
गवां मूत्रं च क्षीरं च गोशकृद्रस एव वा
पञ्चमूली च तत्सिद्धं जलं सेके प्रशस्यते  ८
रास्नां च मधुकं चैव पेषयेद्दधिमस्तुना
प्रदेहो वातवीसर्पे घृताक्तस्य प्रशस्यते  ९
शुङ्गाणि क्षीरिवृक्षाणां मधुकं नीलमुत्पलम्
क्षीरसिद्धमिदं कोष्णं वातवीसर्पनाशनम्  १०

एतैरेवौषधैस्सर्वैः क्षीरपिष्टैः प्रलेपयेत्
सुखोष्णैर्वातवीसर्पे तथा सम्पद्यते सुखी ११
अथ वा दधिमण्डेन तैलक्षीरघृतेन वा
सेचयन्ति सुखोष्णेन विसर्पे वातसम्भवे १२

पित्तविसर्पनिदानम्

कट्वम्ललवणक्षारतीक्ष्णं ह्युष्णानि चाश्नतः
तस्य पित्तं प्रकुपितं शिरामांसत्वगाश्रितम् १३
रक्तेन सह संसृष्टं शरीरे देहवेष्टितम्
ज्वलयित्वा ज्वरं पूर्वं ज्वलिताग्निशिखोपमम् १४
विसर्पं जनयेत्तीव्रं दारुणं पित्तसम्भवम्
स्फोटास्तस्योपजायन्ते वह्निनेव समीरिताः १५
यत्र यत्र च जायन्ते स्फोटास्तत्र विलीयते
हारिद्रं हरितं कृष्णं दोषं मुञ्चत्यभीक्ष्णशः १६
एषोऽग्निकल्पो वीसर्पः पैत्तिको देहनाशनः

पित्तविसर्पचिकित्सा

चिकित्सां तत्र कुर्वीत प्रत्याख्याय चिकित्सकः १७
विरेचनं स्नेहयुक्तं पाययेत्तं चिकित्सकः
परिषेकांश्च कुर्वीत क्षीरैरिक्षुरसेन वा १८
अभीक्ष्णं सेचयेच्चैव हिमकल्पेन वारिणा
क्षीरिवृक्षकषायैर्वा कषायैर्मधुकस्य वा १९
प्रदेहं त्वस्य कुर्वीत शतधौतेन सर्पिषा
मधुकोत्पलकल्कैस्तु क्षीरपिष्टैः प्रलेपयेत् २०
मञ्जिष्ठा पद्मकं पद्मं चन्दनं नीलमुत्पलम्
पधूकं मधुकं द्राक्षा लामज्जककसेरुकौ २१

मृणालानि विदारी च समुद्रान्ता शतावरी
सहस्रवीर्या नलदं बला दन्ती मधूलिका २२
एतानि समभागानि जलद्रोणे विभावयेत्
एतैरेव कषायैश्च पिष्टैश्चैव विपाचयेत् २३
घृतं तस्य हितोऽभ्यङ्गः विसर्पे पित्तसम्भवे
न्यग्रोधोदुम्बराश्वत्थप्लक्षवेतसजास्तथा २४
कल्काः पञ्च प्रशस्यन्ते क्षीरपिष्टाः प्रलेपने

श्लेष्मविसर्पनिदानम्

श्लेष्मलान्यन्नपानानि श्लेष्मलो यो निषेवते २५
तस्य श्लेष्मा प्रकुपितो रक्ते तिष्ठति देहिनः
ततोऽस्य श्लेष्मवीसर्पो जायते मन्दवेदनः २६
स्फोटाश्च तस्य जायन्ते श्वयथुः पाण्डुरेव च
तस्य तन्द्रा च निद्रा च ज्वरः कासः शिरोग्रहः २७
चिराच्च पाकं व्रजति विसर्पः श्लेष्मसम्भवः

श्लेष्मविसर्पचिकित्सा

वमनं रेचनं चैव कुर्यात्तस्य यथाबलम् २८
तैल्वकं वा पिबेत्सर्पिः पुराणं घृतमेव वा
सर्जाश्वकर्णौ मुस्ता सल्लकी सोमवल्कलः २९
द्वौ करञ्जौ कपित्थत्वक् शिरीषोशीरसारिबाः
क्षीरिवृक्षप्रवालानि कुटजत्वग्धनञ्जयः ३०
धवः पलाशः स्योनाकः खदिरो वेतसासनौ
कषायं साधयेदेतं सुखोष्णेन च सेचयेत् ३१
अजाक्षीरेण पिष्टैस्तु कल्कैरेतैः प्रलेपयेत्
तैलप्रस्थं पचेदेभिः कषायैरथ पेषितैः ३२

अभ्यञ्जनेन वीसर्पः श्लैष्मिकस्तेन शाम्यति
गोमांसखरण्डैरुष्णैश्च विसर्पमुपनाहयेत् ३३
मज्जभिर्जाङ्गलानां च तदभ्यङ्गं प्रकल्पयेत्
मांसोपनाहं कुर्वीत श्लैष्मिके वातिकेऽपि वा ३४
जाङ्गलैर्गव्यमायूरैः कुक्कुटैश्छागलैरपि

सन्निपातविसर्पनिदानम्

यदा प्रकुपिता दोषास्त्रयस्त्वङ्मांसमाश्रिताः ३५
रक्तेन सह संसृष्टाः शरीरोद्देशचेष्टिताः
संश्यामं मण्डलं तत्र जायते कृष्णमेव च ३६
अथ लोहितपर्यन्तं विसर्पति सवेदनम्
ज्वरस्तृष्णा च दाहश्च छर्दिर्मूर्छा भ्रमस्तथा ३७
यद्यच्च स्पृश्यते तेन तत्रोष्मा न निवर्तते
दग्धे च शोणिते गात्रं शुष्कालाबुनिभं भवेत् ३८
----- यां तत्र कारयेत्

वातशोणितौषधनिर्देशः

सुकुमारं बलातैलं तैलं शैरिषमेव वा
धान्वन्तरं चापि घृतं पाययेद्वातशोणिते ३९
पिप्पलीवर्धमानं वा तक्रासवमथापि वा
खादिरं वा निषेवेत वातशोणितपीडितः ४०
नित्यमास्थापयेच्चैनं मुस्ताद्येन तु बस्तिना
पाययेत वस्तिभ्याम् अथवा माधुतैलिकैः ४१

वातविसर्पचिकित्सातिदेशः

यच्चिकित्सितमाख्यातं विसर्पे वातसम्भवे
तद्वातशोणिते सर्वं कर्तव्यं शोणितोत्तरे ४२

वाताक्रान्तशोणितचिकित्सा

यदि शोणितमाक्रान्तं गम्भीरे वातशोणिते
वातवत्तच्चिकित्सेत स्नेहपानानुवासनैः ४३
मयूरक्रौञ्चलावानां वसा मज्जा च लाभतः
पानेऽभ्यङ्गे च बस्तौ च बलातैलं प्रशस्यते ४४

शस्त्रकर्म

अक्रियाभिः क्रियाभिर्वा पक्वं पद्वातशोणितम्
पाटनं तत्र कुर्वीत सुविकल्प्य प्रयोगवित् ४५
इत्याह भगवानात्रेयः

इति भेले पञ्चदशोऽध्यायः

षोडशोऽध्यायः

अथातोऽर्शसां चिकित्सितं व्याख्यास्याम इति ह स्माह भगवानात्रेयः

अर्शोभेदपरिचयः

वातात्पित्तात्कफाच्चैव सन्निपातात्तथैव च
सहजानि च रक्ताच्च षोढार्शांस्यथ देहिनाम् १
तेषां निदानं वक्ष्यामि चिकित्सां चानुपूर्वशः
अदृश्यानां च यत्प्रोक्तं दृश्यानां च यथाक्रमम् २

अर्शोनिदानं संप्राप्तिश्च

विदाहिगुरुरूक्षाणामानूपौदकसेवनात्
दधिदुग्धगुडादीनां पिशितानां च भोजिनाम् ३
यवानामुदकानां च दुष्टानामवचारणात्
नित्याजीर्णभुजां चापि वेगानां च विधारणात् ४

प्रवाहणाच्चातिमात्रं मैथुनस्यातिसेवनात्
दुष्टपानप्रसङ्गाच्च कठिनात् पृष्ठपीडनात् ५
निरूहस्यातियोगाच्च बस्तीनां विभ्रमादपि
स्नेहपानाच्च विभ्रान्तान्मद्यदोषाछ्र्मात्क्षयात् ६
एभिः प्रकुपिता दोषा वातपित्तकफास्त्रयः
एकशस्सर्वशो वाथ द्वन्द्वशः शोणितेन वा ७
गुदाभिष्यन्दमेवाशु कुर्वन्ति गुदमाश्रिताः
कीलास्तत्र प्ररोहन्ति सूक्ष्मसर्षपसन्निभाः ८
यवमुद्गादिनिष्पावकर्कन्धुबदरोपमाः
शरीराङ्गुष्ठमात्रा वा ताम्रा गोस्तनसन्निभाः ९

उदावर्तः

निरूढास्ते गुदे कीलाः स्तम्भयन्ति गुदं भृशम्
स्त्रोतसांगुदमानह्य मूलं बध्नन्ति वाप्यथ १०
निरोधात्स्त्रोतसां तेषामूर्ध्वं दोषास्समुत्थिताः
एकैकं दूषयित्वा तु रोगान् कुर्वन्ति चाशयान् ११

अर्शः सामान्यरूपाणि

पुरीषभेदो वैवर्ण्यं शूलं निर्वाहिका तथा
अवदारस्तृषा दाहो गुदपृष्ठे मदो ज्वरः १२
अरुचिश्चाविपाकश्च गात्रक्षयबलक्षयौ
पाण्डुत्वं पर्वभेदश्च श्वयथुश्चाक्षिकूटयोः १३
ग्लानिर्मैथुनहानिश्च गुदभ्रंशो गुदग्रहः
अर्शसां रूपसादृश्यं पृथक्त्वं तेषु वक्ष्यते १४

वातार्शः

कृष्णं पुरीषं भवति रूक्षं किंचित्सफेनिलम्

नित्यं गाढपुरीषश्च भिन्नवर्चाः पुनः पुनः १५
ऊरुपृष्ठकटिग्राहो नित्यानद्धसुदुर्बलः
जायते पर्वभेदश्च कर्णशूलस्तृषा भ्रमः १६
अर्शो यकृद्धि पवनो जठरं वापि वर्धयेत्
शूलाश्चास्योपजायन्त आध्मानं च पुनः पुनः १७
ग्रहणी दूषिता चास्य वैवर्ण्यं चोपजायते
हृत्पार्श्वकोष्ठशूलाश्च दुर्नाम्यनिलसम्भवे १८

पित्तार्शः

सज्वरं पिटकं तृष्णा तीक्ष्णवेगं सशोणितम्
उष्णं द्रवं सदाहं च पित्तार्शस्सूपवेश्यते १९
पाण्डुवर्णश्च भवति पीताभासश्च लक्ष्यते
दह्यते च गुदोऽत्यर्थं गुदपाकश्च जायते २०

श्लेष्मार्शः

श्लेष्मजेष्वपि चार्शस्सु पिच्छिलं शुक्लसंप्लवम्
पुरीषं सकफं याति स्तोकं स्तोकं सवेदनम् २१
उपविष्टश्चिरं चास्ते निःस्वनं चोपवेश्यते
शूयते मेढ्रवृषणं बस्तिश्च गुद एव च २२
अरुचिश्चाविपाकश्च न च पक्वं विरिच्यते
श्वयथुश्च विशत्येनं विशेषेणात्त्रिकूटयोः २३
एतच्छ्लेष्मसमुत्थानामर्शसां रूपमुच्यते

सन्निपातार्शः

सन्निपातसमुत्थानं जानीयात्सर्वलक्षणैः २४

रक्तार्शः

सङ्घातरक्तं विस्रं वा भिन्नं वा पित्तमिश्रितम्

चिरेण च प्रवाहोऽस्य प्रसक्तं वा कदाचन २५
अभिष्यण्णानि मुञ्चन्ति रक्तार्शांस्यथ शोणितम्
वहन्ति धारया रक्तं यथा विद्धा सिरा स्थिता २६
रजस्वलेव युवती रक्तं मुञ्चन्त्यभीक्ष्णशः

श्लेष्मार्शश्चिकित्सा

अतीवमुः द्रं सुरां दन्तीं ककुभं समपूरकम् २७
गवां च महिषीणां च मूत्राण्यथ समाचरेत्
भस्मीकृत्य तु तं क्षारं युक्त्या मद्येन पाययेत् २८
श्लेष्मार्शांसि प्रशमयेच्छ्वयथुं पाण्डुतामपि
अर्शसां वातिकानां तु यदुक्तं वै चिकित्सितम् २९
तदेव श्लैष्मिकाणां तु स्नेहवर्जं समाचरेत्

रक्तार्शश्चिकित्सा

रक्तजेष्वपि चार्शस्सु क्षीरमाजं प्रशस्यते ३०
ऋतुं वाप्ययनं वापि पिबेन्मासमथापि वा

बलादिघृतम्

बला बिल्वशलाटूनि त्रिफला हस्तिपिप्पली ३१
करञ्जमधुपालाशमधुकोत्पलतिन्दुकैः
कल्कैरक्षसमैरेतैर्घृतप्रस्थं विपाचयेत् ३२
अजाक्षीरे दशगुणे तत्सिद्धं मात्रया पिबेत्
एतद्रक्तसमुत्थानि पित्तजानि हि यानि च ३३
अर्शांसि नाशयत्याशु छिन्नाभ्राणीव मारुतः

रक्तार्शोघ्नयोगाः

लोध्रं दारुहरिद्रा च मञ्जा वैभीतकी तथा ३४
तण्डुलोदकपीतानि मधुनार्शोविनाशनम्

लाक्षा हरिद्रा मञ्जिष्ठा मधुकं नीलमुत्पलम्  ३५
अजाक्षीरेण पीतानि रक्तजानां विनाशनम्
शिरीषपुष्पं पुष्पं च कौटजं ककुभस्य च  ३६
दार्वीं हरिद्रा लोध्रं च धातकी कट्फलं वृषः
एतेषां पाययेत्कल्कान्युक्तितस्तण्डुलाम्बुना  ३७
मधुयुक्तः प्रशमयेदर्शो वै रक्तपित्तजम्
मधुकं बदरं द्राक्षा मूलं च कुशकाशयोः  ३८
तण्डुलोदकपीतानि मधुनार्शोविनाशनम्

चाङ्गेरीघृतम्

न्याग्रोधोदुम्बराश्वत्थबदरीप्लक्षवेतसाम्  ३९
पृथक् प्रवालान्यार्द्राणि द्विपलीनानि संहरेत्
अवाक्पुष्प्याः पलान्यष्टावष्टौ दार्व्यास्तथैव च  ४०
शालिपर्णीपृश्निपर्ण्योः पले द्वे द्वे समावपेत्
द्वे रालशाकस्य पले सर्वमेतत्समावपेत्  ४१
द्विद्रोणे सलिले साध्यमष्टभागावशेषितम्
घृतस्य चाढकः साध्यः सकषायः सुखाम्बुना  ४२
चाङ्गेर्याम्लिकया जातः स्वरसः स्नेहसम्मितः
देवदार्वभया मुस्ता चित्रको बिल्वपेशिका  ४३
कट्फलं शृङ्गिवेरं च पिप्पली चन्दनं तथा
सौवीरमञ्जनं मूलं पिप्पल्यास्तिक्तरोहिणी  ४४
प्रियङ्गुगुडपुष्पं च शाल्मलीपिच्छसाह्वया
वत्सकस्य च बीजानि तथैवातिविषा वचा  ४५
एतानक्षसमान् भागान् पृथग्दत्वा विपाचयेत्
एतत्सिद्धं घृतं युक्त्या रक्तार्शो वै विनाशयेत्  ४६

पित्तगुल्ममतीसारं शूलं ज्वरमरोचकम्
स्त्रीणामसृग्दरं घोरं रक्तपित्तं प्रवाहिकाम्  ४७
पाण्डुरोगं विषं कासं कृमींश्चैवापकर्षति
नाशनं श्लेष्मजातानां कायाग्नेर्दीपनं परम्  ४८
गर्भाधानं च वन्ध्यानां शोषिणां चामृतोपमम्
चाङ्गेरीघृतमित्येतत् ख्यातमर्शोविनाशनम्  ४९
बलवर्णकरं चैव रक्तगुल्महरं तथा
पित्तजेष्वपि चार्शस्सु हितं तद्रक्तजेष्वपि  ५०
सन्निपातसमुत्थेषु सर्वेष्वेव च पूजितम्

सहजार्शश्चिकित्सा

अर्शसां सहजानान्तु यथाप्रकृति चाचरेत्  ५१
चिकित्सितं स्वयं बुद्ध्या सम्प्रधार्य यथाबलम्

प्राणदवटकः

त्रिपलं शृङ्गवेरस्य चतुर्थं मरिचस्य च  ५२
पिप्पली कुडवार्धं च चव्यस्य पलमेव च
तालीसपत्रस्य पलं पलार्धं केसरस्य च  ५३
द्वे पले पिप्पलीमूलं चित्रकस्य पलं तथा
तथा त्वक्पत्रयोः कर्षौ सूक्ष्मैलाकर्षमेव च  ५४
त्रिंशद्गुडपले शुद्धे चूर्णान्येतानि साधयेत्
ततोऽक्षमात्रा वटिकाः प्राणदा इति विश्रुताः  ५५
तालीसपत्रवटकास्त एव परिकीर्तिताः
पूर्वं भक्तस्य पश्चाद्वा भक्षयेत्तु यथाबलम्  ५६
मद्यैर्मांसरसैर्यूषैः क्षीरैश्चाप्युपभोजयेत्
एतेन हन्ति कफजान्यर्शांसि सहजानि च  ५७

वातपित्तसमुत्थानि रक्तजानीतराणि च
मदात्यये मूत्रकृच्छ्रे प्रमेहे हृदयग्रहे ५८
विषज्वरे पार्श्वशूले क्षते क्षीणे विरेचिते
मन्दाग्निविषमाग्नीनां तथैव कृमिकोष्ठिनाम् ५९
शूलगुल्मपरीतानां छर्द्यतीसारिणामपि
हृद्रोगिणां कामलिनां शोषिणामूर्ध्ववातिनाम् ६०
कासश्वासपरीतानां सेव्याश्च वटकाः शुभाः

सहजार्शसां शोषचिकित्सातिदेशः

भूयिष्ठं सहजानीह क्षपयन्ति शरीरिणम् ६१
तस्माच्छोषोपचारेण कुर्यात्तस्य चिकित्सितम्

अर्शसि शस्त्रक्षारविधिः

रोगानीकस्य सर्वस्य परमर्शः सुकीर्तितम् ६२
तस्मादर्शो विस्तरेण चिकित्सेत्तु चिकित्सिकः
शस्त्रेण छेदनं तेषां क्षारेण दहनं तथा ६३
शल्यकर्ता प्रयुञ्जीत दृष्टकर्मा चिकित्सितम्

आलेपनादिचिकित्सा

आयुर्वेदविदा यत्तु प्रयोक्तव्यं चिकित्सितम् ६४
आलेपनाभ्यङ्गविधिं स्वेदकर्म च तच्छृणु
अभ्यज्य नाभिं कुक्षिं च बस्तिमुष्कौ गुदं तथा ६५
अम्लैः क्षीरैश्च मूत्रैश्च सुखोष्णैः परिषेचयेत्
तरुणैर्मूलकैः स्विन्नैस्तथा गृञ्जनकैरपि ६६
सुखोष्णैः स्वेदयेद्युक्त्या पिण्याकैर्गोमयेन वा
राठमेरण्डमूलं च मधूकं देवदारु च ६७
यवचूर्णनयुक्तानि क्षीरेणालोडय पाययेत्

तेनोपनाहं कुर्वीत स्वेदयेच्च पुनः पुनः ६८
अर्शांसि शममायान्ति वेदना च निवर्तते
वृषार्कनक्तमालानां काश्मर्यामरण्डयोस्तथा ६९
पत्रक्वाथैः स्वेदयेत्तु तत्र चैवोपवेशयेत्

महानिम्बादितैलम्

महानिम्बं शृङ्गबेरं कुष्ठं कासीसमेव च ७०
सैन्धवं चित्रकं दन्तीं करवीरं शिलां कणाम्
पूतिकं वरुणाद्वल्कं विदारीं लाङ्गलाह्वयाम् ७१
विडङ्गं हेमदुग्धां च हरितालं च पेषयेत्
गर्भेणानेन विपचेत् तैलं मूत्रचतुर्गुणे ७२
स्नुह्यर्कक्षीरयोश्चात्र कुडवः कुडवो भवेत्
एतदालेपनं युक्तमर्शसां शमनं परम् ७३
क्षारकर्मकरं ह्येतन्न च दूषयते गुदम्

लेपादियोगाः

कुलीरशृङ्गी हस्त्यस्थि बला लाङ्गलिकी तथा ७४
हिङ्गु कुष्ठं च तुत्थं च बिल्वं भल्लातकानि च
अर्शसां लेपनं तेन सप्तरात्रं पुनः पुनः ७५
शिरीषबीजं द्वौ क्षारौ लाङ्गली सैन्धवं तथा
स्नुहीक्षीरेण पिष्टानि गवां पित्तेन भावयेत् ७६
अर्शांसि लेपयेत्तेन सप्तरात्रं पुनः पुनः
एतेन लिप्तान्यर्शांसि विनश्यन्ति न संशयः ७७
शिग्रु पिप्पलिका गञ्जा हरिद्रा कौक्कुटंशकृत्
सर्वमेकत्र संहृत्य स्नुहीक्षीरेण पेषयेत् ७८
करवीरोऽनवद्यश्च मालती स्वर्णयूथिका

प्रक्षालनकषायोऽयमर्शसां हित उच्यते ७९
सक्षौद्रं नवनीतं तु प्रलेपो व्रणरोपणः
दह्यते सप्तरात्रेण पुंस्त्वं च न विनश्यति ८०
सौर्मिकाविददं दंशत्वक् पिप्पली सैन्धवं तथा
कुष्ठं दूर्शात्रिकटुकं स्नुहीक्षीरेण पेषयेत् ८१
एतदालेपनं श्रेष्ठं दुर्नामानं विनाशयेत्
स्वर्णक्षीरी तुम्बिकायोर्बीजानि स वत्सकम्
कुक्कुटस्य पुरीषं च स्नुहीक्षीरेण पेषयेत्
एतदालेपनं श्रेष्टमर्शसां क्षारसम्मितम् ८३
दह्यन्तेऽर्शांसि सप्ताहात्पुंस्त्वं च न विनश्यति

धूपनयोगाः

यवास्सिद्धार्थकाश्चैव भल्लातकमथो वसा ८४
धूपनं चन्दनं कुष्ठं शिंशपासार एव च
गवां शकृच्च वाराहं पत्रे वारिष्टशिग्रुजे ८५
घृतमिश्रं प्रशंसन्ति श्रेष्ठं धूपनमर्शसाम्

बस्तिप्रयोगः

रक्तपित्तसमुत्थेषु प्रशस्ताः क्षीरबस्तयः ८६
तीक्ष्णाः कफसमुत्थेषु वातिकेष्वनुवासनम्

साध्यासाध्याता

सन्निपातादसाध्यानि चिरोत्थानीह यानि तु
रक्तजास्सहजा याप्याः साध्या अन्ये त्रयोऽपि ते ८७
इत्याह भगवानात्रेयः

इति भेले षोडशोऽध्यायः

## सप्तदशोऽध्यायः

अथातः श्वयथुचिकित्सितं व्याख्यास्याम इति ह स्माह
भगवानात्रेयः

### शोफनिदानं सम्प्राप्तिश्च

यः क्षीणमांसो मन्दाग्निः व्याधियुक्तस्सुदुर्बलः
गुरूणि सेवतेऽत्यर्थमम्लपित्तकराणि च १
सद्यो वान्तो विरिक्तो वा गुरूण्यन्नानि सेवते
उपोषितश्च योऽत्यर्थं शाकमूलफलाशनः २
मत्स्यान् दधि पयो भुङ्क्ते दिवास्वप्नरतिश्च यः
उपथ्याजीर्णभोजी च नरो व्यायामसेवितः ३
यश्च तिक्तकषायाणि क्षाराम्लकटुकानि च
लघूनि सेवतेऽत्यर्थं रूक्षाणि तु विशेषतः ४
तस्य वातः प्रकुपितः शिरा बाह्याः प्रपद्यते
स पित्तं कोपयत्याशु रक्तं श्लेष्माणमेव च ५
सिरास्ता दोषसम्पूर्णाः संविसर्पन्ति दारुणाः
समुपेत्यैकदेशे वा सर्वगात्रेषु वा पुनः ६
एवं तच्छ्वयथुर्नाम व्याधिर्भवति दारुणः
दोषैः पक्वाशयस्तैस्तैः सोऽधस्ताच्छ्वयथुर्भवेत् ७

### शोफस्यासाध्यता

पादप्रवृत्तः श्वयथुर्नराणां नाशयत्यसून्
योषितां मुखसम्भूत उभयोरपि गुह्यजः ८

### त्रिदोषजत्वेऽपि शोफस्य दोषौत्कट्येन व्यवहारः

भूयिष्ठमिह शोफस्तु दोषसङ्घातसंभवः
यस्तेषां त्वधिको हि स्यात्स स्वरूपं हि दर्शयेत् ९

वातशोफः

श्वयथुर्वातिको रूक्षः कृष्णवर्णस्सवेदनः
करोति पीडितो निम्नमनिमित्तं च नश्यति १०

पित्तशोफः

पैत्तिकश्वयथुर्नीलो लोहितः पीत एव वा
रुजादाहपरीतश्च क्षिप्रपाको ज्वरान्वितः ११

कफशोफः

शुक्लावभासो बहलः श्वेतपीतः स्थिरस्तथा
आलम्बश्चाप्यनाशश्च भृशं शोफः कफात्मकः १२

सन्निपातशोफः

वातपित्तकफानान्तु रूपं स्यात्सान्निपातिके

असाध्यशोफः

असाध्यः सोपसर्गश्च श्वयथुः प्रसृतश्च यः १३
नीलपीतारुणं ज्योतिर्दृश्यते श्वयथौ यदि
किञ्चित्क्षरत्यसलिलं तमसाध्यं विनिर्दिशेत् १४

आगन्तुशोफः चिकित्सातिदेशश्च

शस्त्रदण्डप्रहाराभ्यां प्रपातादस्थिभङ्गतः
श्वयथुः पञ्चमो दृष्टो भूयिष्ठं स तु रक्तजः १५
अभिघाताच्च जातानां मांसमस्थि च पीडितम्
सिराः सन्दूषयत्याशु ततो रक्तं प्रदुष्यति १६
स दाहरागबहुलो वर्धते तीव्रवेदनः
क्षतवैसर्पिकीं तस्य क्रियां कुर्याच्चिकित्सकः १७
एतल्लक्षणमुद्दिष्टं श्वयथूनां यथाविधि

शोफचिकित्सा

चिकित्सितं प्रवक्ष्यामि यथावदनुपूर्वशः १८
कल्याणकं पिबेत्सर्पिर्महातिक्तमथापि वा
महद्यत्पञ्चगव्यं वा ततस्संशोधयेन्नरम् १९

शोफघ्ना योगाः

हरीतकीं समधुकां सक्षौद्रं वापि लेहयेत्
माक्षिकेण च कृष्णां च लिह्यात्क्षीरेण वा पिबेत् २०
हरीतकी शृङ्गबेरं देवदारु च तत्समम्
एतत्सुखाम्बुना पीतं श्वयथूनां निवारणम् २१
अयोरजस्त्रिकटुकं त्रिवृता तिक्तरोहिणी
त्रिफलारसपीतं तच्छ्वयथूना निवारणम् २२
महौषधं देवदारु सुधा वर्षाभुरेव च
एतैः क्षीरं समैः सिद्धं श्रेष्ठं श्वयथुनाशनम् २३
गोमूत्रस्य प्रयोगो वा श्रेष्ठः श्वयथुनाशनः
सक्षीरं वा पिबेन्मूत्रं माहिषं मूत्रमेव वा २४
औष्ट्रं मूत्रं पिबेच्चैव तदुष्ट्रीक्षीरमेव वा
यथाबलं यथादोषं श्रेष्ठं श्वयथुनाशनम् २५
मूलकानि च सिद्धानि सानिले भक्षयेन्नरः

शोफे बहिःपरिमार्जनम्

रसेन मूलकानां तु कुर्वीत परिषेचनम् २६
नक्तमालार्कमूलानां वृषस्यारग्वधस्य च
कषायं परिषिक्तं तु श्वयथूनां निवारणम् २७
सुवर्चला व्याघ्रनखं कुष्ठं कटुकरोहिणी
काकमाचि ऋषभको रास्ना मूर्वा पुनर्नवा २८

वार्ताकी निचुलं मूलं त्रिफला चित्रको वचा
कुठेरको हरिद्रे द्वे श्यामा मूषकपर्णिका २९
विडङ्गं शिग्रुवल्कं च नक्तमालं महौषधम्
गोमूत्रपिष्टं श्वयथौ मुख्यमुद्वर्तनं भवेत् ३०

दन्त्याद्यायसम्

दन्ती विडङ्गं त्रिफला त्र्यूषणं कटुरोहिणी
चित्रकं देवकाष्ठं च त्रिवृता हस्तिपिप्पली ३१
चूर्णान्येतानि तुल्यानि द्विगुणं स्यादयोरजः
क्षीरेणालोड्य पीतानि श्रेष्ठं श्वयथुनाशनम् ३२

अयोरजीयम्

त्रिफलायास्तु कुडवं पिप्पलीकुडवं तथा
विडङ्गमरिचानान्तु द्वे द्वे चैव पले स्मृते ३३
पलं पलं च कुर्वीत दन्तीचित्रकयोरपि
पलं च पिप्पलीमूलं तुष्टेभ्यश्च पलं तथा ३४
शृङ्गबेरपले द्वे च गव्यात्पञ्च पलानि च
शेषाण्यर्धपलीनानि यानि तानि निबोध मे ३५
रास्ना बला गोक्षुरकं मधुकं देवदारु च
वचा सातिविषा पाठा मुस्ता कटुकरोहिणी ३६
कट्फलं सारिवे द्वे च श्यामा भल्लातकानि च
पुनर्नवा सतेजोह्वा त्वक् च पत्रं शतावरी ३७
निदिग्धिका व्याघ्रनखं मञ्जिष्ठा कुशशम्भली
त्रिफला त्रिवृता भार्ङ्गी कुटजस्य फलत्वचः ३८
एतदाहृत्य सम्भारं द्विस्तावत्स्यादयोरजः
तदैकथ्यं कृतं युक्त्या लेहयेन्मधुसर्पिषा ३९

क्षीरं चानुपिबेद्युक्त्या निरन्नक्षीरसेविता
अयोरजीयमित्येतत् ख्यातं सिद्धरसायनम्  ४०
संवत्सरप्रयोगेण शतवर्षाणि जीवति
वर्षद्वयेन मनुजो द्वे जीवेच्छरदां शते  ४१
निहन्याच्छ्वयथुं घोरं वृक्षामिन्द्राशनिर्यथा
पाण्डुरोगमथार्शांसि मन्दमग्निं कृमीनपि  ४२
भगन्दरं कामिलां च कुष्ठानि जठराणि च
सप्लीहानमपस्मारं शूलानि परिकर्तिकाम्  ४३
अतिसारं प्रमेहांश्च क्षतकासं क्षयं तथा
यस्मिन्यस्मिन्विकारे तु योगोऽयं सम्प्रयुज्यते  ४४
तं तं निहन्ति वै रोगं देवारीन् केशवो यथा
अनुप्रयोगो लाजानां सक्तवो मधुना सह  ४५
क्षीरानुपानं लेह्योऽयं दिवसान् सप्त पञ्च वा
अर्शस्स्वामातिसारेषु विधिः स्यात्परिकर्तने  ४६
तथा क्षीणेषु कासेषु ज्वरेषु विषमेषु च
वर्षोत्थितोऽपि श्वयथुस्तस्मान्मासेन शाम्यति  ४७
रसायनप्रयोगाच्च पूर्वोद्दिष्टाद्यथाविधि
शालीन् सषष्टिकांश्चैव नवान्नविकृतीस्तथा  ४८
क्षाराम्ललवणांश्चापि सदा धूमं विवर्जयेत्

शोफेषु सामान्योपक्रमः

आगन्तुश्वयथुर्वापि यो वा स्याद्दोषसम्भवः  ४९
लङ्घनैश्च विलेपैश्च रक्तसेकैः प्रशाम्यति

शोफोपद्रवाः

अविपाको ज्वरश्छर्दिर्दौर्बल्यं परिकर्तिका

श्वासोऽतिसारो हिक्का च शोफस्योपद्रवाः स्मृताः ५०
इत्याह भगवानात्रेयः
इति भेले सप्तदशोऽध्यायः

## अष्टादशोऽध्यायः

अथात उदावर्तचिकित्सितं व्याख्यास्याम इति ह स्माह
भगवानात्रेयः

### उदावर्तनिदानं संप्राप्तिश्च

प्रकृत्या वातलो यस्तु रूक्षाण्यन्नानि सेवते
कषायं कटुकान्नित्यं रसांस्तिक्तांश्च सेवते १
कर्कन्धूनि कपित्थानि करीरलिकुचानि च
पारावतानि भव्यानि यच्चान्यत्फलमीदृशम् २
शुक्तकानि च वल्लूरं पिण्याकं कोद्रवौदनम्
अभिष्यन्दीनि कटुकं वेत्रशाकं च सेवते ३
वातमूत्रपुरीषाणां विधृत्या मैथुनस्य च
एतैरन्यैश्च गुरुभिर्हेतुभिः कुपितोऽनिलः ४
निगृह्णानि गुदद्वारं शरीरं व्याप्य सर्वशः
स शोषयति तत्रस्थः शरीरं शोषयन् भृशम् ५
अधोवहानि स्रोतांसि पित्तश्लेष्मवहान्यपि
मूत्रान्नमलवाहीनि बध्नाति पवनो भृशम् ६
वातसन्दूषितास्ते तु धावन्तो ह्यूर्ध्वमास्थिताः
आमपक्वाशयस्थानं उन्माद्यन्ति सुदारुणम् ७
ऊर्ध्वं ह्यपानस्सम्प्राप्य चोदानेन समागतः
उदावर्त इति प्रोक्तः शस्त्रसर्पविषोपमः ८

लक्षणानि

अथ शूलानि तीव्राणि दाहो मूर्च्छा विवर्णता
शूयते बस्तिमूलं च मूत्रवर्चोग्रहस्तथा ९
बस्तावथ च कुक्षौ च हृदि पार्श्वोदरे तथा
वेदनाभिपरीतश्च निस्संज्ञो वेपतेऽसकृत् १०

उपद्रवाः

निश्वसित्यथ ताम्यंश्च तृष्यत्यपि च हिक्कते
उपद्रवा उदावर्ते शृणु तेषां चिकित्सितम् ११

चिकित्सा

सुस्निग्धमेनमभ्यज्य तैलेन लवणेन च
संकरे प्रस्तरे स्वेदे द्रोण्यां वा स्वेदयेत्ततः १२
ततोऽस्य गुदमभ्यज्य निरूहं सम्प्रदापयेत्
एकं द्वौ वा भिषक् कृत्वा यावद्वा साधु मन्यते १३
सुनिरूढं च तं ज्ञात्वा सुखाम्बुपरिषेचितम्
उष्णोदकानुपानं च भोजयेन्मृदुमोदनम् १४
स्नुहायाः पत्रशाकेन त्रिवृच्छाकेन वा पुनः
ताभ्यां यूषेण भुञ्जीत यच्चान्यद्भेदनं परम् १५
नित्यं भिन्नपुरीषैस्तु भोजनीयैरुपाचरेत्
एवं गस्य पुरीषं हि वायुर्भूयो न शोषयेत् १६
इति भेले चिकित्सितेऽष्टादशोऽध्यायः

एकोनविंशोऽध्यायः

अथात हृद्रोगचिकित्सितं व्याख्यास्याम इति ह स्माह भगवानात्रेयः

सन्निपातहृद्रोगः

सर्वाण्येतानि लिङ्गानि दृश्यन्ते मर्मरोगिणः
सन्निपातसमुत्थोऽसौ नैव सिध्यति कर्मणा १

क्रिमिहृद्रोगः

निर्भिद्यते वेदनार्तं दह्यते मर्म दूयते
भक्तद्वेषो ज्वरो मूर्च्छा श्वासश्च परितप्यते २
भिन्नवर्णोऽथ दीनश्च हृदि कण्डूश्च जायते
हृद्रोगः क्रिमिजः प्रोक्तः पञ्चमस्स तु दुर्जयः ३

साध्यासाध्यता

साध्यास्त्रयस्तु हृद्रोगा वातपित्तकफात्मकाः
द्वौ चासाध्यौ स्मृतौ तत्र साध्यानां शृणु भेषजम् ४

हृद्रोगचिकित्सा

हृद्रोगिणं स्नेहयित्वा शमयेच्छोधयेत्तथा
लङ्घयेदचिरोत्थं तं हृद्रोगं वातिकाद्विना ५
हरीतकी वचा रास्ना पिप्पल्यौ विश्वभेषजम्
शठी पुष्करमूलं च चूर्णं हृद्रोगनाशनम् ६

पाठादिचूर्णम्

पाठावचायवक्षारा अभया चाम्लवेतसम्
दुरालभा चित्रकं च त्र्यूषणं लवणत्रयम् ७
शठी पुष्करमूलं च तिन्त्रिणीकं सदाडिमम्
मातुलुङ्ग्याश्च बीजानि सूक्ष्मचूर्णानि कारयेत् ८
सुखोदकेन मद्यैर्वा चूर्णान्येतानि पाययेत्
अर्शः शूलं सहृद्रोगं गुल्मं चापि व्यपोहति ९

हिङ्गुपञ्चमम्

सौवर्चलं शृङ्गवेरं दाडिमं साम्लवेतसम्
श्वासहृद्रोगशमनमिदं स्याद्धिङ्गुपञ्चमम् १०

वल्लभकघृतम्

पञ्चाशदभयाकल्कं पले सौवर्चलस्य च
चतुर्गुणजले मुख्यं घृतप्रस्थं विपाचयेत् ११
एतद्वल्लभकं नाम प्राणिनां सर्पिरुत्तमम्
अमृतप्रतिमं सृष्टं श्वासहृद्रोगनाशनम् १२

कल्याणकघृतादिप्रयोगनिर्देशः

पिबेत्कल्याणकं सर्पिर्धान्वन्तरमथापि वा
मातुलुङ्गस्य च रसं पिबेत्क्षारागदानपि १३
शतपाकं बलातैलं शैरीषं सुकुमारकम्
तैलान्येतानि सेवेत सदा हृद्गदपीडितः १४
पिबेद्रसायनं सर्पिः क्षीराणि च गुडानपि
पित्तहृद्रोगशमना ये चोक्ता घृतमोदकाः १५

जीवकादिघृतम्

जीवकर्षभकौ द्राक्षा शर्करा श्रेयसी बला
द्वे मेदे द्वे च काकोल्यौ खर्जूर्यसितमुत्पलम् १६
घृतप्रस्थं पचेदेभिः तुल्यांशैर्माहिषं भिषक्
चतुर्गुणेन पयसा पातव्यं युक्तितश्च तत् १७
वातपित्तसमुत्थाने हृद्रोगे नाशनं परम्

महास्नेहः

वसा लाभेन मज्जा च तुल्यं तैलघृतं तथा १८
अमूनि लाभतो दद्यादथ चापि चतुर्गुणम्
वचा त्रिकटुकं रास्ना जीवन्ती जीवको बला १९

निदिग्धिका चांशुमती नीली भार्ङ्गी पुनर्नवा
सिद्धमेभिर्महास्नेहं बलमालेक्य पाययेत्  २०
हृद्रोगं वातिकं स्नेहः सद्य एव चिकित्सति

दोषभेदेन चिकित्सानिर्देशः

विचारयेत्स्वयं बुद्ध्या वैद्यो हृद्रोगभेषजम्  २१
मधुरं पित्तहृद्रोगे स्निग्धमुष्णं च वातिके
त्रयस्तु परिशेषा ये तीक्ष्णोष्णैस्तानुपाचरेत्  २२
क्षारैः क्षारागदैश्चैव वमनैस्सविरेचनैः

क्रिमिहृद्रोगचिकित्सा

चिकित्सितं विस्तरेण यदुक्तं कृमिकोष्ठिनाम्  २३
तदेव क्रिमिहृद्रोगे कर्तव्यमनसूयया

पथ्यापथ्यम्

औदकानूपमांसानि दधि दुग्धं गुडो रसः  २४
अभिष्यन्दकरं सर्वं वातहृद्रोगनाशनम्
एतान्येव तु शेषेषु हृद्रोगेषु विवर्जयेत्
लघूनि चान्नपानानि शस्यन्ते तेषु सर्वदा  २५
इत्याह भगवानात्रेयः

इति भेले एकोनविंशोऽध्यायः

विंशोऽध्यायः

अथातः कासचिकित्सितं व्याख्यास्याम इति ह स्माह
भगवानात्रेयः

कासभेदाः

पञ्च कासाः समुद्दिष्टा वातपित्तकफात्मकाः

क्षतजः क्षयजश्चेति तेषां वक्ष्यामि लक्षणम् १

कासनिदानम्

उदावर्तादभीघाताद्व्यायामाच्चापि कर्शनात्
संभोजनाद्दिवास्वप्नाद् द्रुतपानात्प्रलम्बनात् २
कर्शितानां च रोगेभ्यो दोषासात्म्यकृतात्क्षयात्
तीक्ष्णोष्णगुरुसेवाभिर्नृणां कासा भवन्ति ते ३
तेषां रूपाणि वक्ष्यामि चिकित्सां च पृथग्विधाम्

वातकासः

मारुतात्कासते शुष्कं शूकपूर्णगलो यथा ४
निष्ठीवति च शुष्कं च तत्र मुक्ते न कासते
प्रताम्येत्कासमानस्य हृदयं चावकृष्यते ५
पार्श्वे च रुजतोऽत्यर्थं श्वासेन च विकूजति
शङ्खयोर्जायते शूलं तालुशोषस्तथैव च ६
श्यावे नेत्रे च वीक्ष्येते स्वरो वर्णश्च भिद्यते
विशेषाद्रिक्तकोष्ठश्च कासते वातपीडितः ७

पित्तकासः

अम्लरूक्षान्नपानादिव्यायामोष्णनिषेवणात्
कटुकक्षाररूक्षान्नतीक्ष्णमद्यनिषेवणात् ८
सदाहः सज्वरश्चैव पित्तकासः प्रवर्तते
हारिद्रं कटुकोष्णं च पीतं ष्ठीवति चाति सः ९
मुखस्य कटुकत्वं च तृष्णा चास्योपजायते
हारिद्रे चक्षुषी चास्य लक्ष्येते पित्तकासिनः १०

कफकासः

अभिष्यन्दिगुरुस्निग्धशीतमेद्यान्नसेविनः

दिवास्वप्नप्रसक्तस्य वेगांश्चापि निरुन्धतः ११
कफप्रसेको बहलः कासस्तस्योपजायते
गुरुत्वं शिरसोऽत्यर्थं माधुर्यं वदनस्य च १२
कफात् स्त्यानं च हृदयं भक्तस्यानभिनन्दनम्
स्तम्भश्चैवाविपाकश्च कफकासस्य लक्षणम् १३

क्षतकासः

व्यायामाद्भारहरणान्निग्रहादश्वदन्तिनाम्
निहन्यते यस्य वक्षः क्षतकासः स उच्यते १४
सरक्तं पूतिपूयाभं ग्रथितं दोषसञ्चयम्
निष्ठीवति स कासार्तो ज्वर्यते चातिसार्यते १५
उरो निर्भिद्यमानं च मन्यते प्रश्वसित्यपि
स ताम्येत्कासमानश्च तृष्णा शोषो मुखस्य च १६
मुहुराशूयते कण्ठः स्वरभेदश्च जायते
सघोषं कासते चापि विकृतं भिन्नविस्वरम् १७
दुर्गन्धं च तथोद्गारं क्षतकासे विमुञ्चति

क्षयकासः

सर्वेषां सन्निपाताच्च क्षयकासः प्रवर्तते १८
तस्य ज्वरः पार्श्वरुजा हस्तपादं च दह्यते
कासमानश्च निष्ठीवेत् कफपूर्वं स शोणितम् १९
क्षीयते बलवर्णौ च गात्रं च परिहीयते
न चास्य स्वदते भोज्य न भुक्तं च विपच्यते २०
अतिसारो ज्वरश्छर्दिर्मूर्च्छा चास्योपजायते
क्षयकासस्समाख्यातः

साध्यासाध्यविभागः

स चासाध्यः प्रकीर्तितः २१
क्षतकासस्तु याप्यः स्यात्साध्यानां साधनं शृणु

कासोपक्रमः

बलवन्तं स्नेहितं च शोधनैस्समुपाचरेत् २२
शोधितं भोजयेच्चैनं पुराणान् शालिषष्टिकान्
जाङ्गलानां च मांसानि निषेवेन्मृगपक्षिणाम् २३
औदकानूपमांसानि गुरूणि च विवर्जयेत्
दशकल्कोपसिद्धं वा कल्याणकमथापि वा २४
रसायनं च सेवेत सर्पिः सर्पिर्गुडानि च
सर्पिर्मोदकयोगं वा रसायनविधिं तथा २५
यदुक्तं शोणिते पूर्वं तत्कासेष्वपि योजयेत्
पिप्पल्यामलकं द्राक्षा तुगाक्षीर्यथ शर्करा २६
लाजा घृतं माक्षिकं च लेहः कासविनाशनः
पिप्पल्यामलकं रास्ना लेहो माक्षिकसंयुतः २७
हरीतक्यास्सपिप्पल्याश्चूर्णं माक्षिकसंयुतम्
प्रलेहः स्यान्मधुघृतं सक्षौद्रं शर्करान्वितम् २८

त्र्यूषणादिचूर्णम्

त्र्यूषणं त्रिफलां चैव पद्मकं देवदारु च
रास्नां बलां विडङ्गानि सूक्ष्मचूर्णानि कारयेत् २९
चूर्णं शर्करया युक्तं लेहयेन्मधुसर्पिषा
एष लेहः प्रणुदति पञ्च कासान् समुत्थितान् ३०

यवक्षारादिचूर्णम्

यवक्षारं विडङ्गानि हिङ्गु भार्ङ्गी महौषधम्
सैन्धवं पिप्पली रास्ना तुल्यान्येतानि चूर्णयेत् ३१

घृतमात्रायुतं चूर्णं पिबेत्कासविनाशनम्
मन्दाग्नितां तमश्वासं हिक्कां चैवापकर्षति ३२

करटकार्याद्यवलेहः

समूलफलशाखां तु कुट्टयेत्करटकारिकाम्
तां पचेत्सलिलद्रोणे चतुर्भागावशेषितम् ३३
कषायं तं परिस्राव्य पुनरग्नावधिश्रयेत्
घृतं च युक्त्या दातव्यं कल्कांश्चेमान्प्रदापयेत् ३४
दुरालभा छिन्नरुहा त्र्यूषणं चित्रकं तथा
रास्ना कर्कटकाख्या च पिप्पलीमूलमेव च ३५
एतान्यर्धपलीनानि तथा फाणितशर्करा
पलानि विंशतिं दत्वा तं लेहं सान्द्रमुद्धरेत् ३६
शीते दद्यात्पिप्पलीनां चूर्णस्य कुडवं मितम्
तुगाक्षीर्याश्च कुडवं मधुनः कुडवं तथा ३७
तं लिह्यान्मात्रया लेहं पञ्चकासविनाशनम्
हृद्रोगानथ हिक्कां च श्वासं चैवापकर्षति ३८
सिद्धं मन्त्रं यथा सर्पो नातिक्रामेदुदीरितम्
तथा लेहमिमं कासो नातिक्रामति देहिनाम् ३९

अगस्त्यरसायनम्

दशमूलीमपामार्गं शङ्खपुष्पीं शठीं वचाम्
चित्रकं चात्मगुप्तां च पिप्पलीमूलमेव च ४०
बलां पुष्करमूलं च तथैव गजपिप्पलीम्
द्विपलीनान् पृथग्दद्यात्प्रत्यग्रं चाभयाशतम् ४१
यवाढकं सहैभिश्च जलं पञ्चाढकं पचेत्
अवतार्य यवैस्सिद्धैरुद्धरेत्तु हरीतकीः ४२

भेदनं तासु कर्तव्यं ततो वंशशलाकया ४३

एकविंशोऽध्यायः

शिरोरोगचिकित्सा

शङ्खकचिकित्सा

एतदालेपनं कार्यं शङ्खकस्य विनाशनम्
एतान्येव तु सर्वाणि कषायमुपधारयेत्
तेन शीतेन कर्तव्यं बहुशः परिषेचनम् १

सूर्यावर्तः

नित्यं वेगप्रतीघातादजीर्णाध्यशनादपि
रक्तं वायुश्च कुपितौ मस्तके प्रतितिष्ठतः २
स मस्तकगतो वायुः रक्तं चैकत्र मूर्च्छितम्
उदयेऽर्कस्य संपातादादित्यकरदूषितम् ३
वेदनां जनयेत्तीव्रां शङ्खयोर्मूर्ध्नि गण्डयोः
निघ्नन्निव शिरोऽत्यर्थं मुहुर्गृह्णाति पाणिना ४
निष्यन्दते हि मस्तिष्कमादित्योष्मसमुद्धतम्
वर्धते वर्धमाने तु सूर्ये शीर्षरुजा ह्यतः ५
स मस्तिष्कश्च निर्वाति दिवसस्य परिक्षयात्
सूर्यावर्त इति प्राहुर्मुनयोऽनेन हेतुना ६

चिकित्सा

कल्याणकं पिबेत्सर्पिः सूर्यावर्तनिपीडितः
विरेचनं च कार्यं स्यात् तथा शीर्षविरेचनम् ७
नस्यकर्म तथा कुर्यात् स्नेहश्चौत्तरभक्तितः
घृततैलवसाभिस्तु धार्याः स्युः शीर्षबस्तयः ८
मयूरान् कुक्कुटान् लावान् क्षीरेण सह साधयेत्

तत्क्षीरमन्थनोद्भूतं नवनीतमथोद्धरेत् ९
तत्क्षीरे षड्गुणे साध्यं जीवनीयैस्सहौषधैः
ततोऽस्य नस्यं दातव्यं सूर्यावर्तविनाशनम् १०
बिल्वमंशुमती रास्ना सहदेवा पुनर्नवा
काला गुडूची सुषवी पद्मकं मधुकं बला ११
एतान्याजेन दुग्धेन सिद्धानि परिषेचनम्
एतैरेवौषधैस्सिद्धं सर्पिराजं विनाशयेत् १२
जाङ्गलानि च मांसानि कारयेदुपनाहनम्
तेनास्य शाम्यति व्याधिस्सूर्यावर्तस्सुदारुणः १३

अनन्तवातः

पललं दधि मत्स्यांश्च पिष्टान्नविकृतीः पयः
दिवास्वप्नं च भजतस्त्रयः कुप्यन्ति धातवः १४
मन्यापाश्चात्यघाटासु तीव्रा कुर्वन्ति वेदनाम्
ततश्चैवोत्थिता तीक्ष्णा भ्रुवोश्चाक्ष्णोश्च तिष्ठति १५
स्पन्दयेद् गण्डपार्श्वे च हनूवास्थाय तिष्ठति
नेत्रयोरामयान् कुर्याच्छङ्खौ चास्य प्रतोदयेत् १६
अनन्तवात इत्येष शीर्षव्याधिः सुदारुणः
सन्निपातसमुत्थानस्तस्य वक्ष्यामि भेषजम् १७

चिकित्सा

ललाटस्थसिरां विध्येत् स्नेहपानं च कारयेत्
कायं विरेचयेदस्य शिरश्चापि विरेचयेत् १८
चिकित्सितं यथाख्यातं सूर्यावर्तशिरोग्रहे
अनन्तवाते तत्कार्यं तदा सम्पद्यते सुखम् १९

अर्धावभेदः

सम्भोजनाद्दिवास्वप्नाच्छर्दिक्षवथुनिग्रहात्
अभिघातात्प्रतापाच्च वेगसन्धारणादपि २०
शिरोवहां भृशं गृह्य तस्योभौ कफमारुतौ
शीर्षार्धं शङ्खमूलं च दारयन्तौ च तिष्ठतः २१
श्वयथुर्जायते गण्डे चक्षुश्चैव विरज्यते
अर्धावभेदको नाम शीर्षव्याधिः सुदुस्तरः २२

चिकित्सा

विरेचनं च शिरसो नस्यकर्म च कारयेत्
लाभतश्च वसा सर्वा घृतं तैलं च युक्तितः २३
तस्यैव महतीं मात्रां पाययेत्तेन सिध्यति
कार्पासबीजं माषांश्च गोधूमान् सर्षपान् यवान् २४
पञ्चमूल्यौ तथा द्वे च क्षीरेण सह साधयेत्
औष्ण्यमुद्वहता तेन नाडीस्वेदेन स्वेदयेत् २५
उष्णैश्च तैः क्षीरसिद्धैः कुर्यात्तस्योपनाहनम्

शिरोरोगेषु नस्यादि

करञ्जं शिग्रुबीजानि त्वक् पत्रं शर्करा तथा २६
सर्वेषां शीर्षरोगाणामेतच्छीर्षविरेचनम्
शिरसोऽन्ते ललाटान्ते शङ्खपर्यन्त एव च २७
मन्ययोश्चापि पिप्पल्या दहेत्काण्डेन वा पुनः
तथैवार्धावभेदस्य तेनैव विधिना भवेत् २८
वातिके शीर्षरोगे च दहनं श्लैष्मिकेऽपि च
तस्मादतिप्रवृद्धेषु शीर्षरोगेषु बुद्धिमान् २९
आरण्यपिप्पलीभिर्वा दहेत्काण्डेन वा पुनः

शिरःकम्पनिदानम्

रूक्षान्नसेविनां नित्यं तथोदावर्तिनामपि ३०
ऊर्ध्वमुत्क्रम्य पवनः शिरःकम्पमुदीरयेत्

चिकित्सा

तं पाययेन्मृदु स्नेहं बलातैलमथापि वा ३१
नस्यकर्म स्नेहपानं नित्यं चैवानुवासनम्

मूर्धश्वयथुः

समश्नतः सर्वरसानजीर्णाध्यशनादपि ३२
कुर्वन्ति मूर्ध्नि श्वयथुं त्रयो दोषास्समुत्थिताः

चिकित्सा

तस्य पूर्वं शिरा विध्येत् पिबेज्जीर्णघृतं तथा ३३
विशोधनं धूमपानं शिरसश्च विरेचनम्
इत्येष शीर्षरोगाणां प्रदेशः परिकीर्तितः ३४

कण्ठरोगस्तच्चिकित्सा च

अन्तःकण्ठगतान् रोगान् वक्ष्यामि सचिकित्सितान्
उच्चैः प्रलापात्संरम्भादतीवाध्यशनादिभिः ३५
रूक्षान्नपानसेवाभिर्भिनत्ति पवनः परम्
धूमायते गलस्तस्य तथा धुमधुमायते ३६
दूयते हृदयं चास्य स्वरभेदश्च मारुतात्
नस्यकर्मणि पाने च बलातैलं प्रशस्यते ३७
कफवातोत्तरे धार्यास्तथैव कवलग्रहाः

अरोचकचिकित्सा

पिप्पली पिप्पलीमूलं मरिचानि हरीतकी ३८
शृङ्गवेरं यवक्षारो लोध्रं तेजोवती तथा

एतानि समभागानि चूर्णानि मधुना सह ३९
अरोचके श्लेष्मभवे प्रधानं मुखधावनम्
पिप्पल्यो मधुकं मूर्वा चन्दनं कमलोत्पलम् ४०
उशीरं पद्मकं लोध्रमेला लामज्जकं तथा
एतानि समभागानि क्षौद्रेण सह साधयेत् ४१
द्विगुणं शर्करां दत्त्वा पित्तजायामथारुचौ
अजाज्यौ मरिचं कुष्ठं बिल्वं सौवर्चलं तथा ४२
मधुकं शर्करा तैलं वातिके मुखधावनम्
जम्ब्वाम्रपल्लवं लोध्रं त्रिफला चव्यचित्रकौ ४३
पटोलं नक्तमालं च शिरीषः खदिरासनौ
दार्वी नक्तमालं च शिरीषः खदिरासनौ
दार्वी हरिद्रा मुस्ता च तेजोह्वा मधुकं बला ४४
एतानि समभागानि कषायमुपसाधयेत्
इत्येष कवलग्राहः कर्तव्यो मधुसंयुतः ४५
सार्द्रकश्च कपित्थो वा सव्योषमधुशर्करः
अरोचकेषु सर्वेषु प्रशस्तो धारणो मुखे ४६
अजाज्यो मरिचं द्राक्षा तिन्त्रिणीकं सदाडिमम्
सौवर्चलं कारवीं च गुडमाक्षिकसंयुतम् ४७
द्राक्षौघौतकय मुखविशोधनः
अरोचकानां सर्वेषां प्रशस्तः कवलोत्तमः ४८

गलशुण्डी तच्चिकित्सा च

सम्भवन्ति त्रयो दोषाः गले नासौदनेरिणीम्
गलशुण्डीं वर्धयन्ति घोरा गलविसारिणीम् ४९
सिराव्यधः स्नेहपानं तीक्ष्णं शीर्षविरेचनम्

शस्त्रावचारो धूमश्च नाशयेद्गलशुण्डिकाम्  ५०

कर्णरोगाः

वातिकः कर्णशूलश्च कर्णवातश्च वातिकः
बाधिर्यं च समाख्यातं वातश्लेष्मसमुद्भवम्  ५१

कर्णरोगचिकित्सा

स्नेहपानानि नस्यं च नाडीस्वेदोपनाहनम्
आनूपाश्च वसा मज्जाः प्रशस्ताः कर्णपूरणे  ५२
पिप्पल्यौ बिल्वमूलं च कुष्ठं मधुकमेव च
लोध्रो व्याघ्रनखं मांसी सूक्ष्मैला देवदारु च  ५३
गर्भेणानेन तैलस्य प्रस्थं मृद्वग्निना पचेत्
मूलकस्यार्द्रकस्यापि रसौ स्नेहसमौ तथा  ५४
तेन कर्णे पिचुं दद्यान्नस्यकर्म च कारयेत्
तेनोपशाम्यति क्षिप्रं कर्णशूलस्सुदारुणः  ५५
शैरीषं शतपाकं च बलातैलं च मिश्रकम्
आशु कर्णगतं शूलं बाधिर्यं चापकर्षति  ५६
छागसर्पमयूराणां नक्रशल्यकयोरपि
तुलां मांसस्य विपचेत् क्षीरद्रोणेषु सप्तसु  ५७
पादभागावशिष्टन्तु शीतं पूतं विमन्थयेत्
तत्र यन्नवनीतं स्यात्तदेभिर्विपचेत्समैः  ५८
क्षवः ---  फणिज्जको सैन्धवं बला
वचा व्याघ्रनखो मांसी देवदार्वगरू तथा  ५९
जीवकर्षभकौ मेदा शृङ्गी कर्कटकस्य च
आत्मगुप्ताफलं द्राक्षा त्वक्पत्रमथ वालुकम्  ६०
तत्सर्वं स्त्रावयित्वा तु स्वनुगुप्तं निधापयेत्

पिचुमभ्यञ्जनं पानं बस्तिकर्म च कारयेत् ६१
एतेन शीर्षरोगाश्च कर्णशूलानि यानि च
कर्णस्रावाश्च शाम्यन्ति रोगा जत्रुगताश्च ये ६२
एतद्वातोत्तरे प्रोक्तं कर्णशूले चिकित्सितम्

रक्तजक्रिमिजकर्णरोगनिरूपणप्रतिज्ञा

अत ऊर्ध्वं प्रवक्ष्यामि रक्तजं क्रिमिजं च यत् ६३

रक्तजकर्णरोगः

यदा दुष्टं पित्तरक्तं कर्णमेव प्रधावति
श्वयथुश्च हि रागश्च कर्णशूलश्च जायते ६४

रक्तजकर्णरोगचिकित्सा

विध्येत्सिरां ललाटस्य दद्याच्चास्य विरेचनम्
म्ले शिरपानं च तथा शीर्षविरेचनम् ६५
अक्रियाभिः क्रियाभिश्च कर्णे पाकं नियच्छति
तस्योपनाहं कुर्वीत व्रणतैलं च रोपणम् ६६
तथा कर्णशलाकाभिः कर्णस्रावं विशोधयेत्
त्रयूषणं सैन्धवं कुष्ठं मञ्जिष्ठा मधुकं तथा ६७
रास्ना हरिद्रा तेजोह्वा वराङ्गं तिल्वकत्वचः
लाक्षा मूर्वा रूबूकार्ककेसरासनवीरणाः ६८
सूक्ष्मैला तगरं पत्रं त्वग्व्याघ्रनखमेव च
आरनालतिला माषा भूर्जग्रन्थिर्निदिग्धिका ६९
एतैस्तुल्यकृतैर्भागैस्तैलप्रस्थं विपाचयेत्
भोगिनश्च वसां दद्यान्मांसं बभ्रोः खरस्य च ७०
एतेन पूरयेत्कर्णं मुहूर्ताच्चावनामयेत्
कर्णस्रावं कर्णशूलं बाधिर्यं कर्णवेदनाम् ७१

सर्वांश्चैव शिरोरोगान् तैलमेतन्नियच्छति

क्रिमिजकर्णरोगः

कर्णस्त्रोतस्सु रुद्धेषु तालुके मस्तके तथा ७२
वेदना जायते तीव्रा विदाहस्तोदविभ्रमौ
एतानि कर्णशूलस्य कृमिजस्य मनीषिणः ७३
रूपाण्याहुः समस्तानि स चासाध्य इहोच्यते
पतङ्गः शतपद्यश्च तथा कीटपिपीलिकाः ७४
प्रविश्य कर्णस्त्रोतो वै भृशं कुर्वन्ति वेदनाम्
कर्णौ निस्तुद्यतस्तस्य तथा घुरघुरायणम् ७५
कीटे चरति रुक् तीव्रा निष्पन्देन भवेदरुक्

क्रिमिजकर्णरोगचिकित्सा

मधुशुक्तेन पयसा सुरया वाऽऽसवेन वा ७६
उष्णेन पूरयेत्कर्णं मुहूर्ताच्चावनामयेत्
स्रुते कीटे तु यद्यस्य कर्णस्त्रावः प्रवर्तते ७७
यथोक्तं तस्य कुर्वीत कर्णस्त्रावचिकित्सितम्

द्वाविंशोऽध्यायः

अजीर्णे भुक्तस्यावस्थावशात्परिणामः

अजीर्णे यद्दिवा भुक्तं न दुष्यति यथा नृणाम्
व्युषितं दूष्यते वापि तत्र हेतुं निबोध मे १
व्यायच्छतो विचरतः व्याक्षिप्तमनसस्तथा
मन्दे रसप्रसेके च दिवाभुक्तं न दुष्यति २
कमलप्रतिमं प्राहुर्हृदयं दिवसक्षयात्
संवृतं विवृतं चैव भवत्यादित्यरश्मिभिः ३

विबुद्धे हृदये चास्य स्रोतस्सु विवृतेषु च
हृदयप्रभवाश्चास्य स्रोतोभिर्विवृतैर्दिवा ४
न क्लेदमुपगच्छन्ति दिवा तेनास्य धातवः
अजीर्णे प्रातराशे तु तृप्तस्यापि दिवा तथा ५
अनेन विधिना भूयः सायमाशो न दुष्यति
व्युषितं दूष्यते चापि रोगान् सञ्जनयत्यपि ६
संवृतेष्वयनेष्वेवं वायुश्चाग्निश्च देहिनाम्
व्यायामिनं विनैवेह तौ ह्यन्नं पचतो निशि ७
म्लाने तु हृदये रात्रावुत्क्लेशैकपदेषु च
संवृतेष्वपि स्रोतस्सु व्यायामं च न सेवते ८
यदन्नशेषं हृदये तिष्ठत्यामाशयेऽपि च
तेनास्यामप्रलम्बेन देहे पक्तिमगच्छता ९
हृदये व्याधिते रुद्धे विरामूत्रेऽस्य निशात्यये
उपस्थिते चान्नरसे पित्तश्लेष्मसमुद्भवे १०
अन्नसंपुटरुद्धे च मारुते चोर्ध्वमास्थिते
हृदयग्रहमुत्क्लेशं हृल्लासं गुरुगात्रताम् ११
तदन्नशेषं जनयन्मूर्छां परिकिनी तृषाम्
ज्वरं छर्दिमतीसारं हिक्कां भक्तस्य वारुचिम् १२
अजीर्णे व्युषितं कुर्याद्रोगानेतान् विषोपमान्
तस्मादजीर्णे व्युषितं भोजनं प्रतिषिध्यते १३
इति भेले चिकित्सिते द्वाविंशोऽध्यायः

## त्रयोविंशोऽध्यायः

### निद्रादिनिरूपणप्रतिज्ञा

निद्रा चैवातिनिद्रां च मूर्छां चैव निबोध मे

निद्रासम्भवः

तमसा हि समाक्रान्ते सत्त्वे दिवससंक्षयात् १
इन्द्रियाण्यस्य कर्मभ्यः क्रमात्प्रविरमन्त्यथ
भुक्तेऽन्ने पच्यमाने च श्लेष्मणा हृद्गतेन तु २
विवृद्धेन निरुद्धेषु चक्षुःश्रोत्रवहेषु च
कर्मक्रियासूर्यपादैश्छेदिता प्राणिनो दिवा ३
शारीरमानसैश्चैव तैस्तैरुक्तैरुपाहृता
एवंक्रियान्नसंज्ञानि तन्द्रा विशति तामसी ४
एवं सर्वेषु भूतेषु निद्रा नामोपजायते
चिन्ताशोकश्रमहरी ब्रह्मणा विहिता पुरा ५
स्वपतस्तस्य देहेऽस्मिन् प्राणापानौ सहोष्मकौ
जागृतः जीवसंयुक्तस्तेनासौ न विनश्यति ६
इन्द्रियाणामुपरमे मनस्सूपरतं यदा
सेवते गोचरं तेषां विद्धि तं स्वप्ननामकम् ७
पितृदेवमनुष्येषु संभाषणमुपैति च
परं च लभते स्वप्नभेदस्स हि न वात्मनः ८

अतिनिद्रा

अतिनिद्रा तु जन्तूनां श्लेष्मण्युच्छ्रायमागते

निद्रानाशस्तच्चिकित्सा च

वातोत्तराणां नियतं निद्रा नाशं व्रजत्यपि ९
बस्तयः स्नेहपानानि ग्राम्यानूपौदका रसाः
गुडदुग्धस्य पानं च निद्रासंजननं परम् १०
अभ्यङ्गोद्वर्तनं स्नानं मद्यं मधु घृतं तथा
मनःप्रसादौ निर्वाणं नष्टनिद्रस्य भेषजम् ११

अतिनिद्राचिकित्सा

धूमपानं विरेकश्च कायस्य शिरसस्तथा
प्रच्छर्दनं लङ्घनं च निद्रासङ्गं निवर्तयेत् १२
अयानयानं व्यायामो गूढार्थपरिचिन्तनम्
यवान्ननित्यसेवाथ निद्रासङ्गं निवर्तयेत् १३

मूर्च्छासम्प्राप्तिः

इन्द्रियाणां प्रसन्नत्वं मनस्ताल्वन्तराश्रितम्
हृदि सन्तिष्ठते चित्तं बुद्धिसर्वेन्द्रियाश्रयम् १४
सन्निपत्य च रक्तं च त्रयो दोषाश्च दूषिताः
सम्पीडयन्तीह नृणां हृदयं शोषयन्त्यपि १५
आशुष्यमाणं हृदयं प्रमादाद्धि विमुह्यति
संपीडितं च हृदयं मनश्चित्तं च मोहयेत् १६
सदनाच्चित्तमनसोः सम्प्राप्नोति विसंज्ञताम्

चतुर्विंशोऽध्यायः

अथ वातव्याधिचिकित्सिताध्यायः

वातरोगचिकित्सता

पाङ्गुल्यं खञ्जतामूरुस्तम्भमा क्षेपमर्दितम्
हनुग्रहं पादहर्षं पार्श्वशूलं ज्वरं क्षयम्
वर्ध्मकुण्डलिकृच्छ्राणि हृद्ग्रहं गात्रजं क्लमम् १
अशीतिं वातिकान् रोगान् तैलमेतद्ध्यपोहति
सन्निपातसमुत्थांश्च संसृष्टाश्चैकजांस्तथा २
योनिव्यापत्तिवन्ध्यात्वं प्रवृद्धं यदसृग्दरम्
बलवर्णकरं चैव कासक्षयनिबर्हणम् ३

## बलादितैलम्

बलामूलात्पलशतं दशमूलाच्छतं तथा
शतावर्या गुडूच्याश्च रास्नामधुकदारुणः ४
कुर्याद्दशपलान्भागान् कुलुत्थान् बदरान् यवान्
माषांश्च कुडवांशेन जलद्रोणेषु पञ्चसु ५
क्वाथं द्रोणावशिष्टन्तु तैलाढकसमायुतम्
घृतप्रस्थेन विपचेत् क्षीरद्रोणेन चाप्यथ ६
पेष्यान् प्रदद्याद्वैद्यो वै तगरोशीरवालकम्
कुष्ठधान्यकमुस्तैला वचाञ्चागुरुचन्दनम् ७
परिपेलवकालीयं मांसीं श्रीवेष्टकं रसम्
कुन्दुरुष्कं च तक्कोलं सरलं नलिकां नखम् ८
स्पृक्काकुंकुमकर्पूरं जातितिन्दुकयोः फलम्
पत्रं चोरकनागाह्वं शताह्वां सहरेणुकाम् ९
सतुरुष्कं जीवनीयं प्रियंगुं हपुषां तथा
स्थौणेयकमुशीराणि शैलेयं च समं घृतम् १०
कल्कपिष्टैः पचेत्तैलमेतद्वातामयापहम्
पाने चाभ्यञ्जने नस्य बस्तौ चापि प्रयोजयेत् ११
सर्वदेहाश्रया वाताः संसृष्टाश्चैकजाश्च ये
तेषां निग्रहणे युक्तिमित्युवाच पुनर्वसुः १२
तैलेनानेन सततं विधिवत्तर्पितं नरम्
सर्वामया वर्जयन्ति सिह्नावासं यथा मृगाः १३

## बलातैलम्

बलाया जातसारायास्तुला कुर्यात्सुकुट्टिताम्
पचेत्तोये चतुर्द्रोणे चतुर्भागावशेषितम् १४
पलानि दश पिष्टानि बलायास्तत्र दापयेत्

लुञ्चितानां तिलानान्तु दद्यात्तैलाढकद्वयम्  १५
चतुर्गुणेन पयसा पचेत्तन्मृदुनाग्निना
वातव्याधिषु सर्वेषु रक्तपित्ते क्षतक्षये  १६
व्यापन्नासु च योनीषु शस्तं नष्टे च रेतसि
तालुशोषं तृषां दाहं पार्श्वशूलमसृग्दरम्  १७
हन्ति शोषमपस्मारं विसर्पं सशिरोग्रहम्
आयुर्वर्णकरं प्रोक्तं बलातैलं प्रजाकरम्  १८

रास्नातैलम्

रास्नामूलस्य कुर्वीत द्वे शते च बलाशतम्
शतावरीगुडूचीभ्यां वरणाच्च शतं शतम्  १९
आढकीशिग्रुकैरण्डशिरीषारग्वधादपि
श्वदंष्ट्राभूतिकाभ्यां च पृथक् पञ्चपलं क्षिपेत्  २०
तोयद्रोणेषु दशसु साधयेत्सूक्ष्मकुट्टितम्
द्रोणावशेषे तस्मिंस्तु तैलस्यार्धार्मणं पचेत्  २१
द्रोणान् दश च दुग्धस्य घृतस्यार्धाढकं तथा
तदैकध्यं विपक्तव्यं गर्भे चात्र विपाचयेत्  २२
मधुकं मालतीपुष्पं मञ्जिष्ठां मदयन्तिकाम्
काश्मर्यामजमोदां च शृङ्गीं कपिलमुस्तकम्  २३
आत्मगुप्ताढकीमूर्वावार्ताकानि मधूलिकाम्
सहदेवामथैरण्डां रोहिषं नवमालिकाम्  २४
फणिज्ञकं मधूकानि वीरानीरकदम्बकम्
फलं च पीलुपालाशं कुमार्याश्वत्थतैन्दुकम्  २५
ह्रीवेरं पिप्पलीकुष्ठं द्राक्षां कटुकरोहिणीम्
कायस्थां च मधुपर्णीं सचित्रकाम्  २६
महापुरुषदन्तां च मोदकीं सल्लकीमपि

देवदार्वगुरु श्रेष्ठं चन्दनं परिपेलवम्  २७
नीलोत्पलमुशीराणि मृद्वीकां साम्लवेतसाम्
एतैः पलसमैः पिष्टैस्समं तैलं विपाचयेत्  २८
भोजनेऽभ्यञ्जने पाने बस्तौ नस्ये च शस्यते
वातव्याधिषु सर्वेषु क्षतक्षीणे शिरोग्रहे  २९
स्वरक्षये रक्तपित्ते हिक्काश्वासेष्वसृग्दरे
मारुते पित्तसंसृष्टे संसृष्टे शोणितेन च  ३०
विषमज्वरहृद्रोगे गात्रकम्पे तथैव च
अपस्मारे रक्तगुल्मे पुंसां नष्टे च रेतसि  ३१
रास्नातैलमिदं श्रेष्ठं बलमांसविवर्धनम्

सहचरतैलम्

समूलपत्रशाखस्य शतं सहचरस्य च  ३२
चतुर्षु तोयद्रोणेषु साधयेत्सूक्ष्मकुट्टितम्
द्रोणावशेषपूते च पचेत्तैलाढकं शनैः  ३३

आवस्थिकविधिः

अम्बुजानूपमांसैश्च शिरस्तस्योपनाहयेत्
नस्यकर्म च कुर्वीत पिचुं मूर्ध्नि च दापयेत्  ३४
मुखं विघटयेत्तस्य सन्दंशेन यथासुखम्
भृङ्गारेण प्रयच्छेच्च स्नेहमांसरसं तथा  ३५
अव्याददानस्य तथा दन्तानुद्धाट्य संहतान्

आमाशयगतवातचिकित्सा

आमाशयगते वाते स्नेहैर्नोपचरेद् भिषक्  ३६
लङ्घनं तस्य कुर्वीत तथा संशोधनानि च
आमप्रलेपसम्भूतः श्लेष्मस्थानगतोऽनिलः  ३७

स्नेहैर्मांसरसैश्चैव स्नेह्यमानो विवर्धते
तस्मात्तस्य विरूक्षाणि भोजनानि कटूनि च ३८
आहारे चौषधार्थे च विदध्याच्छास्त्रकोविदः
आमाशयस्थे वमनं क्षाराः क्षारगुडास्तथा ३९
अरिष्टाश्शीधवश्चैव हितं मांसं च जाङ्गलम्
श्यामाकाः कोरदूषाश्च मुद्गा लोहितशालयः ४०
स्वेदो यवान्नं च हितमामाशयगतेऽनिले

पक्वाशयादिगतवातचिकित्सा

यदा पक्वाशयगतो रूपाणि कुरुतेऽनिलः ४१
सिरासु सर्वगात्रेषु मज्जस्वस्थिगतोऽपि वा
निरूप्य रूपमुक्तस्य तस्य कुर्याच्चिकित्सितम् ४२
कृत्स्नं यदुपदिष्टं तु वातव्याधिचिकित्सितम्

रक्तस्थानगते वायौ चिकित्सातिदेशः

रक्तस्थानगते वायौ पूर्वमुक्तं चिकित्सितम् ४३
वातशोणितके तत्तु कुर्याद्रक्तगतेऽनिले

गृध्रसीचिकित्सा

समुत्थितायां गृध्रस्यां बलातैलं प्रशस्यते ४४
श्रेष्ठं मूलकतैलं वा तैलं सहचरस्य वा
बस्तयः स्नेहपानानि स्नेहश्चोन्मर्दनानि च ४५
गृध्रस्यां तु प्रशस्यन्ते शोणितस्य च मोक्षणम्

अशीतिवातरोगेषु चिकित्सातिदेशः

अशीतिर्वातजा रोगाः ये ये पूर्वं प्रकीर्तिताः ४६
तेषामेषा चिकित्सा तु वायोः स्थानेषु सप्तसु
साध्या ये चाप्यसाध्यास्तु रोगा मारुतसम्भवाः ४७

उत्पतन्त्यथ तिष्ठन्ति वायोः स्थानेषु सप्तसु

अस्थिमज्जागतवातजा रोगाः

अस्थिमज्जागतो भङ्गं कम्पनं गात्रशोषणम् ४८
पत्नग्रहमपस्मारमुन्मादमपि चार्दितम्
हनुग्रहं कुणिं कुब्जं पाङ्गुल्यं सन्धिविच्युतिम् ४९
करोति मारुतोऽन्ये च वातरोगा भवन्त्यपि

स्थानवशात् चिकित्सातिदेशः

साध्यान् स्थानवशादेव तांश्चिकित्सेद्यथाक्रमम् ५०
इतीयं विस्तरेणोक्ता चिकित्सा वातरोगिणाम्

वातप्रभावः

वातो हि जीविते हेतुः प्राणिनां च तथात्यये ५१
सन्तत्या गमयेन्नित्यं सूर्यं चन्द्रमसं तथा
वर्षणं वायुना लोके तथैव च निवारणम् ५२
वहते च विमानानि सर्वशः स्वर्गवासिनाम्
सागरे कुरुते वेलां वायुर्मेघान् सृजत्यपि ५३
विगतिर्वायुना मेघो विद्युद्भवति वायुना
त्रैलोक्यधारी पवनस्सर्वं वातात्प्रवर्तते ५४
निर्वर्तयेत्पुष्पफलं वायुर्धारयते जलम्
उल्कापातान् महीकम्पान् धरणीधारणानि च ५५
आकाशे धारयेद्गङ्गां वायुस्त्वतिबलान्वितः
एताश्चान्याश्च बहवो वायोर्गुणविभावनाः ५६
तस्मात्प्रयत्नतस्तस्य चिकित्सां भिषजां वरः
कुर्याच्छास्त्रानुसारेण तथा सिद्धिमवाप्नुयात् ५७
इत्याह भगवानात्रेयः

इति भेले चतुर्विंशोऽध्यायः

पञ्चविंशोऽध्यायः

अथातः प्लीहहलीमकचिकित्सितं व्याख्यास्याम इति ह स्माह भगवानात्रेयः

प्लीहनिदानम्

अभिष्यन्दीनि भोज्यानि भुञ्जीतातीव यो नरः
लङ्घितो वा विरिक्तो वा व्यायाममुपसेवते १
भुक्त्वा पीतोदको यस्तु सहसा संप्रधावति
पृष्ठयानाद् द्रुताच्चापि प्लवनात्स्नेहविभ्रमात् २
रोगैरन्यैश्च क्लिन्नानां दुर्बलानां च देहिनाम्
प्लीहा स्थानात्प्रवर्धेत तस्य रूपाणिमे शृणु ३

वातजप्लीहरूपाणि

करोत्यग्नेर्मार्दवं च शूलं कठिन एव च
महापरिग्रहश्चैष प्लीहा वातसमुद्भवः ४

पित्तजप्लीहरूपाणि

सज्वरः सपिपासश्च स्वेदनस्तीव्रवेदनः
पीतकः स्तब्धगात्रश्च प्लीहा पित्तात्मको भवेत् ५

श्लेष्मजप्लीहरूपाणि

नित्यानाहितकोष्ठश्च नित्योदावर्तपीडितः
वेदनाभिपरीतश्च प्लीहा श्लेष्मात्मको मतः ६

सान्निपातिकप्लीहरूपाणि साध्यासाध्यविभागश्च

त्रयाणां यत्र रूपाणि दोषाणां लक्षयेद् भिषक्
असाध्यमिति तं विद्यात् प्लीहानं सान्निपातिकम् ७

मुष्टिमात्रस्सुसाध्यस्तु परमस्तमुपाचरेत्
अतिप्रमाणवृद्धस्तु न सिध्यति कथञ्चन ८

प्लीहसामान्यलक्षणम्

सर्वेषु तेषु दौर्बल्यमानाहो गात्रसादनम्
अरुचिश्चाविपाकश्च वर्चोमूत्रग्रहो ज्वरः ९
मार्द्वीकं च पिबेद्युक्त्या गण्डीरारिष्टमेव वा
चन्द्रप्रभं शार्करं वा पाययेत्तु हलीमके १०
अयोरजीयं क्षीरेण पाययेत्तु रसायनम्
अगस्त्याभयलेहं वा सेवेत प्रयतः शुचिः ११
इत्याह भगवानात्रेयः

इति भेले पञ्चविंशोऽध्यायः

षड्विंशोऽध्यायः

अथातोऽपतन्त्रकचिकित्सितं व्याख्यास्याम इति ह स्माह भगवानात्रेयः

अपतन्त्रकनिदानं सम्प्राप्तिश्च

रूक्षान्नपानसेवाभिर्वेगसन्धारणेन च
कर्शितस्यातिमात्रन्तु चेष्टितस्य तथैव च १
विरिक्तयुक्तनस्यस्य बस्तिना कर्शितस्य च
अपतन्त्रितभक्तस्य भक्तस्याप्यतिसेविनः २
शुद्धः पक्वाशयगतो वायुर्वृद्धः प्रपद्यते
स पीडयित्वा हृद्यं धमनीर्दश संस्थितः ३
ऊर्ध्वमापूर्य स्रोतांसि शिरश्शङ्खौ च धावति
आक्षेपात्तस्य गात्राणि नाम्यन्ते च धनुर्यथा ४

निमीलिताक्षः स्तब्धो वा निरूच्छ्वासो विचेष्टते
कृच्छ्राच्छ्रवसिति सर्पीव कूजत्यपि कपोतवत् ५
मुक्ते च हृदि वातेन पुनः स्वास्थ्यं नियच्छति
भूयस्तु शेते स्रस्ताक्षो मुह्यत्यप्रयतो यथा ६
घोरस्स वातिको रोगो धमनीहृदयाश्रितः
सन्निरोधाच्च नाडीनां यन्त्रितानां च वेगतः ७
स्त्रोतसां व्याकुलीभावान्नित्यं स्यादपतन्त्रकः

अपतन्त्रके वमनादिनिषेधः

न चैनं वामयेद्धीरो न चाप्येनं विरेचयेत् ८
न चास्यास्थापनं दद्यान्न चैनमपतर्पयेत्

अपतन्त्रके नस्ययोगाः

पिप्पल्योऽथ विडङ्गानि शिग्रूणि मरिचानि च ९
एतानि सूक्ष्मपिष्टानि कुर्याच्छीर्षविरेचनम्
श्वसतो यस्य संवृद्धिः श्लेष्मणो मारुतस्य च १०
तस्य श्लेष्मण्युपहते संज्ञा समुपजायते

सौवर्चलादिचूर्णम्

सौवर्चलं दाडिमं च तथा हिंग्वम्लवेतसम् ११
महौषधं च पीतानि नाशयन्त्यपतन्त्रकम्

हिङ्ग्वादिचूर्णम्

हिङ्गु पुष्करमूलं च तुम्बुरूणि हरीतकी १२
यवक्वाथोदकेनैतद्दातव्यं लवणैस्त्रिभिः
हृद्रोगं पार्श्वशूलं च प्रवृद्धं चापतन्त्रकम् १३
योगोऽयं शमयत्याशु शूलं गुल्मं च वातिकम्

विभीतकादिचूर्णम्

विभीतकं चातिविषां भद्रमुस्तां सपिप्पलीम् १४
भार्ङ्गी सशृङ्गबेरां च सूक्ष्मचूर्णानि कारयेत्
तानि चूर्णानि मद्येन पीतान्युष्णोदकेन वा १५
नाशयन्ति नृणां क्षिप्रं श्वासकासापतानकम्

हरीतक्यादिचूर्णम्

हरीतकी वचा रास्ना सैन्धवं साम्लवेतसम् १६
घृतमात्रासमायुक्तं नाशयत्यपतानकम्

शुकनासादिघृतम्

शुकनासा महावल्ली द्वे बृहत्यौ महौषधम् १७
निचुलश्चैव भार्ङ्गी च कालिका
पुनर्नवा चेति समैरक्षमात्रैः पचेद्भिषक् १८
तोयाढके घृतप्रस्थं तत्सिद्धं चापि पाययेत्
श्वासकासा महाहिक्का हृद्रोगश्चापतन्त्रकः १९
नातिक्रामेदिदं सर्पिः वेलामिव महोदधिः

काकादन्यादिघृतम्

काकादनी बला लम्बा द्वे बृहत्यौ महौषधम् २०
कदम्बपुष्पी काला च चन्द्रवल्ली तथा वृषा
आदारी च विदारी च सुवहा केशवत्यपि २१
एतेषां द्विपलान् भागान् जलद्रोणे विपाचयेत्
एतैरेवाक्षमात्रैश्च घृतप्रस्थं विपाचयेत् २२
द्विगुणेन कषायेण तत्सिद्धं युक्तितः पिबेत्
असाध्या महतीं हिक्कां श्वासं चैवापकर्षति
अपतानं सहृद्रोगं श्वयथुं पाण्डुतामपि २३

### हरीतक्यादिघृतम्

हरीतक्याश्च पञ्चाशद् द्वे च सौवर्चलात्पले
विपाचयेद् घृतप्रस्थं द्विगुणक्षीरसंयुतम्  २४
अपतानं सहृद्रोगमेतत्सर्पिर्व्यपोहति
हिक्काश्वासौ च संवृद्धौ सद्य एव चिकित्सति  २५
अपतानकनाशार्थमेतदुक्तं चिकित्सितम्

### अर्दितनिरूपणप्रतिज्ञा

अथार्दितानां वक्ष्यामि चिकित्सां लक्षणानि च  २६

### अर्दितनिदानम्

शस्त्रकाष्ठप्रहाराच्च ग्राम्यधर्मातिसेवनात्
छर्दनान्मद्यपानाच्च धनुषश्च विकर्षणात्  २७
नित्यं व्यायामशीलानां पतनाल्लङ्घनादपि
अवस्रंसितभक्तस्य व्याधिना कर्शितस्य च  २८
नरस्य कुपितो वायुरूर्ध्वमेव प्रपद्यते
हनुमूलं शिरश्चापि ग्रीवां चैवार्दयत्यपि  २९
स जिह्मं कुरुते तस्य वदनं चक्षुरेव च
कम्पतेऽस्य शिरोग्रीवं नासा वक्रीभवत्यपि  ३०
तस्याक्षिणी निमील्येते निष्पन्दे विषमे तथा
ऊर्ध्वं विप्रेक्षतेऽत्यर्थं तिर्यगाकेकरेक्षणः  ३१
ओष्ठौ श्वयथुमन्तौ च चिबुकं च विनाम्यते
ष्ठीवत्यथातिमात्रं हि कला सज्जति चास्य वाक्  ३२

### सप्तविंशोऽध्यायः

अथ व्रणचिकित्सिताध्यायः

आदितस्तु यथासन्नं शोधनं व्रणनाशनम्

व्रणे उपक्रमाः

व्रणस्य काले सम्पश्यन् ततः कुर्यादुपक्रमम्
भेदनं पाचनं चैव स्तम्भनं शोषणं तथा १
स्रावणं रोपणं चैव व्रणे कुर्यादुपक्रमम्

पीडनीयलेपः

उदिता कर्णमोटश्च रास्ना मूलकपर्णिका २
शुकनासा सुगन्धा च समङ्गा चैव कुष्ठकम्
कालेयकं बला दन्ती पाठा शतपदी स्थिरा ३
पीडनीयः प्रलेपोऽयं व्रणश्वयथुनाशनः

व्रणरागहरलेपः

उदुम्बरः शिरीषश्च मधुकं चन्दनं तिलाः ४
इन्दुकान्तं समुद्रान्ता तथैव च शतावरी
नीलोत्पलं पद्मकं च त्वचा द्वे चापि सारिवे ५
एष प्रलेपो रागं व्रणानां तु विनाशयेत्

व्रणरोपणलेपौ

तिलकल्कस्समधुकः पिचुमन्दस्य कल्कवान् ६
पूर्वाभ्यां सर्पिषा युक्तो व्रणेषु व्रणरोपणः

व्रणरोपणतैलम्

त्रिफला धातकी लोध्रं समङ्गा मधुकं बला ७
द्वे बृहत्यौ समुद्रान्ता तथैव च शतावरी
नीलोत्पलं कट्फलं च मालती स्वर्णयूथिका ८
एषां कल्कैस्समैस्सिद्धं तैलं स्याद् व्रणरोपणम्

व्रणनिबर्हणतैलम्

निम्बाम्रामलकीनां च पल्लवं मधुकं बला ९
एतैश्शकृद्रसे सिद्धं तैलं व्रणनिबर्हणम्

व्रणशोधनकषायाः

न्यग्रोधोदुम्बराश्वत्थप्लक्षपाठावरार्जुनाः १०
शमीबदर्या एतेषां कषाया व्रणधावनाः

व्रणिनः पथ्यानि

यवान्नं शालिका रक्ता मुद्गा नीवारषष्टिकाः ११
जाङ्गलानि च मांसानि व्रणितश्शीलयेत्सदा

व्रणिनः वर्ज्यानि कायचिकित्सकक्रियानिगमनं च

अम्लं दधि च शाकं च मांसं चानूपवारिजम् १२
क्षीरं गुरूणि चान्नानि व्रणितः परिवर्जयेत्
एतानुपक्रमान् कुर्याद्व्रणे कायचिकित्सकः १३

व्रणे शल्यकृतां कर्म

शल्यकृच्चापि कुर्वीत व्रणे शेषानुपक्रमान्
छेद्यं भेद्यं च लेख्यं च सीव्यं प्रच्छनमेव च १४
पाचनं यच्च तैस्तुल्यं भवेदन्यच्च किंचन

व्रणदोषादयः

द्वादश व्रणदोषाश्च परीक्षा चैव षड्विधा १५
उपक्रमाश्च षट्त्रिंशन्नियताः शल्यहेतुके
उद्देशतः क्रियाश्चैताः कुर्यात्कायचिकित्सकः १६

व्रणरोपणचूर्णम्

त्रिफला मधुकं लोध्रं मञ्जिष्ठा बिल्वशुण्ठिका

समङ्गा धातकी लाक्षा निर्यासः शाल्मलेरपि १७
पालाशस्य च निर्यासो निर्यासः ककुभस्य च
सूक्ष्मान्येतानि चूर्णानि व्रणानां रोपणं परम् १८
गुग्गुलोः सल्लकीनां च सर्जस्य तिनिशस्य च
निर्यासा रोपणाः प्रोक्ताः समस्ताः पृथगेव वा १९
व्रणे धूमक्रमा ये च प्रत्युत्पत्तौ च या क्रिया
एतच्छेषं शल्यकृता कर्तव्यं दृष्टकर्मणा २०
इत्याह भगवानात्रेयः

इति भेले सप्तविंशोऽध्यायः

अष्टाविंशोऽध्यायः

अथातः पानात्ययचिकित्सितं व्याख्यास्याम इति ह स्माह भगवानात्रेयः

मद्यगुणदोषाः

सर्वे लवणवर्ज्यास्तु रसा मद्ये प्रतिष्ठिताः
तीक्ष्णं चोष्णं तथा सूक्ष्ममाशुकारि व्यवायि च १
दीपनीयं च हृद्यं च सर्वभूतहितं लघु
चिन्ताशोकक्लमहरं रतिप्रीतिविवर्धनम् २
हर्षस्थाने हर्षकरं भयस्थाने भयापहम्
रतिविहारजननं द्युतिशौर्यकरं परम् ३
शरीरावयवान् सर्वाननुगच्छत्यणूनपि
तैक्ष्ण्यान्मोहयते चित्तमौष्ण्यात्पित्तकरं च तत् ४
हृद्यं वैशद्यभावाच्च रौक्ष्यान्मारुतकोपनम्
श्लेष्मघ्नं तीक्ष्णभावाच्च हर्षणाद्धृष्यमुच्यते ५

अतिपानजतृष्णा

मद्यावचारणात्तस्य कुपितौ पित्तमारुतौ
शोषयेतां रसवहाः सिराः क्लोम च तालु च ६
तृष्णापरीतस्सोऽत्यर्थं पानमेवाभिनन्दति
पीतं पीतं शोषयतो देहे तस्याग्निमारुतौ ७
गच्छत्याशु जरां देहे सिकतायामिवोदकम्
तस्मादहोरात्रमपि पिबतः पानसेविनः ८
तृष्णा नोपशमं याति पानं जीर्यति चाशु च

मद्यजव्यापदः

भ्रामितस्य तु मद्येन पित्तं वायुश्च देहिनः
विहीने चित्तमनसि बुद्धिं पीडयतस्ततः
सरोदिति प्रहरति विसृजत्यति धावति १०
पतत्युत्पतते हन्ति बह्वबद्धं च भाषते
गच्छत्यगम्यामन्यां च कार्याकार्ये न बुध्यते ११
तथा श्वभ्रे च पतति शेते च मृतशायिकाम्
नग्नो विशेद्विचैतन्यं विचरेद्धि विचेतनः १२
ईदृशोऽपि भवेन्मत्तः पानेनोन्मथितेन्द्रियः

युक्त्या पाने गुणाः

प्रमाणेन पिबेन्मद्यं नातिसेवेत पण्डितः १३
युक्त्या तु सेव्यमानं तत्पानं चामृतमुच्यते
पानं तद्भोजनेऽत्यर्थं रुचिमन्तं करोति च १४
हर्षं जनयते स्त्रीषु तज्जरोगं चिकित्सकः
पानेनैव प्रशमयेन्नान्यत्तस्य चिकित्सितम् १५
तस्मान्मद्यं निषेवेत

उपचाराः

शुभ्राणि वचनानि च
भजेल्लघूनि चान्नानि जाङ्गलान्न मृगाद्विजान्  १६
स्नानं सुगन्धैः स्नानीयैः कृत्वा त्वगनुलेपनम्
शब्दान् मनोज्ञान् शृणवंश्च मनोज्ञैस्सह बन्धुभिः  १७
गृहेऽत्यन्तसुखे ह्येतत्कुर्यात् प्रस्थोत्तरोत्तरम्
कान्तास्सुमध्यवयसः तनुमध्याश्शुचिस्मिताः  १८
चन्द्रपादान्मनोहृष्टाश्चित्रमाल्याम्बरस्रजः
चतुराः क्षौमवसना मुक्तामणिविभूषिताः  १९
रक्तचन्दनदिग्धाङ्गा मनोज्ञा मणिमेखलाः
ताः समालिङ्ग्य शयने शयीताप्रतिमाः स्त्रियः  २०
योषितो वै प्रधाना वै शीतस्पर्शः स्वभावतः
नृणां स्वभावतश्चैव नार्यो हर्षविवर्धनाः  २१
सोमो हे शिशिरो धातुर्हृदि हर्षात् प्रवर्धते
तस्मादालाप संलापैस्संवाहनविनोदनैः  २२
नारीं प्रहर्षजननीं सेवेताशु मदात्यये
गीततूर्यस्वनास्तत्र सुहृदश्च मदोत्कटाः  २३
प्रियानुवर्ति गायन्तो हर्षं कुर्युर्मदात्यये
निर्दोषाणि च मद्यानि युक्तानि शिशिरैर्जलैः  २४
तानि तानि शुभैर्मांसैः सोपदंशानि पाययेत्
पानकानि च मुख्यानि षाडवांस्तर्पणानि च  २५
तवक्षीरीं सचुक्रीं च सेवेतासौ मदात्यये
तक्रं द्राक्षारसस्सीधुस्तैत्तिरीको रसो मधु  २६
आरनालं च शुक्रं च कोलदाडिमयो रसौ
लाजाः सन्तर्पणाश्चैव सूक्ष्माश्च यवतर्पणाः  २७

सौवर्चलमजाज्यश्च सैन्धवं लवणं तथा
शिशिरेण जलेनैतत्तर्पणं पानवत्पिबेत् २८
मातुलुङ्गोपदंशं च हन्यात्पानात्ययं नृणाम्
लाक्षारसस्तैत्तिरीको दाडिमस्य रसो मधु २९
पूर्वकल्पेन पातव्यं सम्पन्ने पानविभ्रमे

कर्कन्ध्वादिपानकम्

कर्कन्धुबदराणां च प्रस्थं कुर्यात्सुकुट्टितम् ३०
द्विप्रस्थे गालयंस्तोये सप्तकृत्वः पुनः पुनः
मृण्मये तत्र वै भाण्डे स्वनुगुप्तं निधापयेत् ३१
द्वे च दद्याद्गुडपले शर्करायाः पलं तथा
सूक्ष्मं च मरिचात्कर्षं चतुर्थं केसरस्य च ३२
त्वक्पत्रधरणे द्वे च सूक्ष्मैलाकर्षमेव च
अमृणालार्धकर्षं च सूक्ष्मचूर्णानि कारयेत् ३३
जातीवासनयोपेतं पानकं पानविभ्रमे
नाशयत्याशु पानेन छिन्नाभ्राणीव मारुतः ३४
एतच्छर्दि तृषां दाहमतिसारं प्रवाहिकाम्
अरुचिं मूत्रकृच्छ्रं च हन्यात्पानात्ययं नृणाम् ३५

काश्मर्यादिपानम्

काश्मर्यं दाडिमं द्राक्षां मधुकं सपरूषकम्
कुटजानि च संक्षुद्य प्रक्षिपेत्तज्जलाढके ३६
सूक्ष्मैलामधुकं लोध्रं मञ्जिष्ठा पिप्पली तथा
एतानि सूक्ष्मचूर्णानि दद्यान्मानं च युक्तितः ३७
केसरं चात्र दातव्यं पुष्पं नीलोत्पलस्य च
एतत्पानात्यये देयं तृषाच्छर्दिनिवारणम् ३८

गुडूच्यादिपानकम्

द्वे गुडूची पले द्वे च बला द्विपलमेव च
लामज्जकमृणालाभ्यां द्वे पले मधुकोत्पलम्  ३९
एतान्यापोथ्य देयानि नवे भाण्डे जलाढके
गुडस्य च पलान्यष्टौ दद्यान्नीलोत्पलं तथा  ४०
एतत्पानात्यये देयं पानकं केसरैर्युतम्
ज्वरदाहतृषाश्वासच्छर्दिहिक्काश्च नाशयेत्  ४१

पानात्यये शोधनविधिः

यदि संशमनैरेतैर्न शाम्येत्पानविभ्रमः
पाययेत्तं त्रिवृच्चूर्णं युक्त्या मद्येन संयुतम्  ४२
पिबेद्विरेचनं चूर्णं महातर्पणमेव वा
पूर्वोक्तान्मोदकांश्चापि भक्षयित्वा पिबेत्सुराम्  ४३
वमनीयं यदा विद्यात्तदैनं वामयेद्भिषक्
वमनैर्मद्यसंयुक्तैश्चूर्णैः पाचनकैरपि  ४४
यवक्षारैश्च संसर्गीं तस्य कुर्याच्चिकित्सकः

पेयादिनिषेधः

न हि पेयाः प्रशस्यन्ते मनुष्याणां मदात्यये  ४५
मदात्यये न शस्यन्ते यवाग्वो दोषनाशनाः
जाड्यात् पानस्य पीतस्य वेगं जनयते पुनः  ४६
तन्मद्यशेषं संवृद्धं कुर्याद्घोरानुपद्रवान्
तस्मात्पानात्ययेऽपथ्याः स्नेहाः पेया यवाग्वपि  ४७

पानात्ययार्तौ पानमेवौषधम्

सूक्ष्माणि देहस्रोतांसि मद्यं समनुधावति
तिष्ठत्यवयवैश्चान्यस्रोतस्सु विषमेष्वपि  ४८

विष्वग्धृतांस्तु कोष्ठस्थान् कोपयत्यानिलादिकान्
धातवस्ते खरीभूता विवृद्धाः पानदूषिताः ४९
पानेन सह संसृष्टा जनन्त्यामयान् बहून्
व्यवायि मद्यमुद्दिष्टं विशेषेण मनीषिभिः ५०
ये तु सूक्ष्मादिविषया मद्यादीननुयान्ति वै
न हि तान्विषयानन्यो रसश्शक्तो विधारितुम् ५१
तस्मात्पानात्ययार्तानां मद्यमेवौषधं परम्
स्वा हि योनिश्च तत्पानं प्रलीनं कोष्ठमाश्रितम् ५२
वशीभूतं प्रयत्नेन महास्रोतः प्रपद्यते
आर्तस्य मद्यसंयुक्तान्यौषधान्यपि सर्वशः ५३
मद्यात्यये प्रकुर्वीत क्रियाः शीताश्च सर्वशः
अतश्च मद्यसंयुक्तास्तर्पणाः खलु देहिनः ५४
देयाश्चातिविरिक्ताय स्रोतसां शोधनाय च

पानात्यये विषवदुपचारः

औष्ण्यात्तैक्ष्ण्याद्विकासित्वाद् व्यवायित्वाच्च रौक्ष्यतः ५५
तुल्यं हि रसवीर्याभ्यां विषं मद्यं च कीर्तितम्
तस्मात्तत्तत् क्रियास्सर्वा विषवत्समुपाचरेत् ५६

वर्ज्यानि

क्लेदनं तीक्ष्णमुष्णं च विदाह्यञ्जननावनम्
तस्मादुष्णोदकं स्वेदं धूमं पानं च सर्पिषः ५७
ज्वालानलं तु सर्वेषां यवागूश्च विवर्जयेत्
दधि दुग्धं च शाकं च ग्राम्यानूपौदकानि च ५८
तिलपिष्टकृतं चैव पानरोगी विवर्जयेत्

सेव्यानि

शालीन् सषष्टिकान् मुद्गान् जाङ्गलान्मृगपक्षिणः ५९
पानात्यये प्रशंसन्ति भोजनेषु चिकित्सकाः

वातादिजपानात्ययचिकित्साप्रस्तावः

समेषु धातुकोपेषु विविक्तेषु च मे शृणु ६०

वातपानात्ययचिकित्सा

अतिमात्रं यदा पानं पीतं कोपयतेऽनिलम्
संदृश्य वातिकं रूपं तस्य कुर्याच्चिकित्सितम् ६१
सौवर्चलव्योषयुतं मद्यं माक्षिकसंयुतम्
चुक्रं दाडिमसंयुक्तं वातपानात्यये हितम् ६२
तोयं मद्यं च शुक्तं च दधि त्वम्लं च काञ्जिकम्
समाक्षिकस्तर्पणोऽयं वातपानात्यये हितः ६३
अभ्यङ्गो मर्दनं स्नानं पानान्यर्धोदकानि च
व्यक्ताम्लव्योषसंयुक्तान् रसान् व्रीहींश्च शीलयेत् ६४
छागलं तैत्तिरं क्रौञ्चं कौक्कुटं बार्हिणं तथा
वातपानात्ययार्तानां भोजनार्थं हितं नृणाम् ६५
आम्रमाम्रातकं भव्यं कपित्थं करमर्दकम्
पूर्वकल्पेन पातव्यं पानकं वातरोगिणाम् ६६
सार सौवर्चलं हिङ्गु मातुलुङ्गं महौषधम्
तथाजमोदचूर्णं च मद्येन सह पाययेत्

चव्यादिचूर्णम्

चव्यं सौवर्चलं हिङ्गु मातुलुङ्गमहौषधम्
तथाजमोदचूर्णं च मद्येन सह पाययेत् ६७

पित्तपानात्ययचिकित्सा

पानात्यये पित्तकृते पानकं शर्करायुतम्
पिबेन्माद्विकसंयुक्तमर्धतोयपरिप्लुतम् ६८
केचित्पानं तु गर्हन्ति पित्तपानात्यये नृणाम्
तन्मद्यान्न हि चेच्छक्यं विना चान्यैश्चिकित्सितुम् ६९
संयुक्तं तद्धि पित्तघ्नैर्मद्यमेवापि सेव्यते
विदार्यामलकानां च रसैरिक्षुरसेन वा ७०
मधूकमधुकाश्मर्यखर्जूरं नीलमुत्पलम्
पानकं मद्यसंयुक्तं पूर्वकल्पेन साधयेत् ७१
आर्द्रक्षौमपरिच्छन्ना मुक्तामणिविभूषिताः
श्यामाश्चन्दनदिग्धाङ्गाः स्वप्यादाश्लिष्य योषितः ७२
मद्यं खर्जूरकल्केन पिबेदिक्षुरसेन वा
पक्वं पीलुरसं वापि वार्ताकीरसमेव वा ७३
रसो द्राक्षाविदारीभ्यां मद्यमिक्षुरसो मधु
पित्तपानात्ययार्तानामेतत्पानं हितं नृणाम् ७४
दृतिं हिमाम्बुसम्पूर्णां गन्धमाल्यसमुच्छ्रिताम्
स्वप्यात्परिष्वज्य गृहे पित्तपानात्ययार्दितः ७५
सरांसि वनराजिश्च नलिनी फुल्लपङ्कजा
भवेत्पङ्कजपत्रैश्च शयनं चन्दनोक्षितम् ७६
उपगूह्य मृणालानि कल्हारकुसुमानि च
शयीत जलसंसृष्टव्यजनैरुपवीजितः ७७
पानात्यये पित्तकृते शस्त्राशनिविषोषमे
जाङ्गलैर्घृतसंयुक्तैर्भोजयेद्रक्तशालिकान् ७८
मुद्गयूषेण वा शीतं भोजयेन्मृदुलौदनम्
त्रिफलायाः कषायं वा पिबेन्मद्येन संयुतम् ७९
क्षौद्रेण रसमिक्षोर्वा त्रिवृत्कल्केन वा पुनः

त्रिफलात्वङ्मधूकानि पद्मकं पद्मकेसरम्  ८०
नीलोत्पलं मृणालानि नलदं चन्दनं बलाम्
सिद्धं कषायं शीतं तैः शर्करामधुसंयुतम्  ८१
किंचिन्मद्येन संयुक्तं पित्तपानात्यये हितम्
द्राक्षा पीलूनि पक्वानि खर्जूराणि परूषकम्  ८२
भव्यं पनसमज्जा च मज्जा तालफलस्य च
आपोथ्य तानि सर्वाणि पलांशानि जलाढके  ८३
चतुर्भागावशेषं तु नवे कुम्भे समावपेत्
दत्वा सितापलान्यष्टौ पलं नीलोत्पलस्य तु  ८४
तत्पिबेत्पानकं युक्त्या पित्तपानात्ययार्दितः

श्लेष्मपानात्ययचिकित्सा

श्लैष्मिके पानरोगे च मद्येन वमनं हितम्  ८५
पटोलं पिचुमन्दं च मदनस्य च पल्लवम्
गुडूची चाटरूषश्च त्रिफला पारिभद्रकः  ८६
कषायं पाययेदेतं शीतं माक्षिकसंयुतम्
नित्यं सेवेत तिक्तानि कषायकटुकानि च  ८७
जाङ्गलानि च मांसानि सेवेत मृगपक्षिणाम्
पिबेत्कुटन्नटाचूर्णं त्रिफलारससंयुतम्  ८८
दीपनीयांश्च सेवेत योगान् पानेन नित्यशः
विकारे श्लेष्मणि हितं मद्यं भूयिष्ठमेव हि  ८९
तस्मात्पानात्यये मद्यं श्लैष्मिके परिचक्ष्महे
एषा विमानतः प्रोक्ता श्लेष्मपानात्यये क्रिया  ९०

सन्निपातपानात्ययचिकित्सा

सर्वतः सन्निपाते तु सदा कुर्याच्चिकित्सितम्

पानाजीर्णम्

अहानि सप्त चाष्टौ वा नृणां पानात्यये स्मृतम् ९१
पानं हि भजते जीर्णमत ऊर्ध्वं विमार्गतः
अनेन कालयोगेन यो रोगो न निवर्तते ९२
कृत्वानुपूर्व्या पानस्य कुर्यात्तस्य चिकित्सितम्

उपद्रवाः तेषां चिकित्सातिदेशश्च

हिक्काश्वासादयो रोगा ये च सर्वे समुत्थिताः ९३
तेषां चिकित्सितं कुर्याद्यथा स्वे स्वे चिकित्सिते
इति पानात्ययार्तानां विस्तरेण चिकित्सितम् ९४
प्रजाहितमिदं प्रोक्तं शिष्याणामर्थसिद्धये ९५
इत्याह भगवानात्रेयः

इति भेले अष्टाविंशोऽध्यायः

इति भेलसंहितायां चिकित्सास्थानं समाप्तम्

## कल्पस्थानम्

### प्रथमोऽध्यायः

अथातो मदनकल्पं व्याख्यास्याम इति ह स्माह भगवानात्रेयः

#### मदनभेदाः

पिण्डीतकानि तु त्रीणि संग्रहोक्तानि मे शृणु
कृष्णं श्वेतमुभे तच्च त्रितयं मदनं स्मृतम् १

#### मदनस्योत्कर्षः

फलानान्त्वेव सर्वेषां मदनं सर्वशोधनम्
वमनास्थापने योज्यं तथैवाप्यनुवासने २

#### मदनसंकलनस्थापनादि

यदा न परिपूर्णानि परिपक्वानि तानि च
भवन्ति रसपूर्णानि ततस्तान्युद्धरेद् भिषक् ३
यवपल्ले तथैतानि तुषपल्ले तथा पुनः
सप्तरात्रं वासयित्वा संकुञ्चितफलत्वचा ४
सुभावितानि विज्ञाय मृदुभूतानि शास्त्रवित्
द्विधा त्रिधा शोधयित्वा सम्यक् संशोध्य चावपेत् ५
धान्येषु मासं संस्थाप्य मृदा चैवावलेपयेत्
निधूमे च निवाते च कपाटपिहिते गृहे ६
वैहायसे स्थापयेच्च यथा स्वेदो न संभवेत्

#### मदनकल्पः

एतेषां फलमज्ज्ञानां सनखं मुष्टिमाहरेत् ७
जर्जरीकृत्य दृषदि पात्रे चाप्यधिवासयेत्
मधुकस्य कषायेण रात्रिमेकां निधापयेत् ८
अथ चोत्थाय पूर्वाह्णे हस्तौ प्रक्षाल्य मर्दयेत्

परिस्रुतं सलवणं मधुयुक्तं प्रताप्य च ९
पाययेदातुरं स्निग्धं छर्दयेत्तेन साधुना

प्रयोगान्तराणि

एतेनैव च कल्पेन जीमूतकफलैरपि १०
इक्ष्वाकुकुटजाभ्यां च लवणैश्चापि कारयेत्
कृतवेधैर्हस्तिपर्णैः धामार्गवफलैरपि ११
कषायं कारयेदेभिः फलबीजानि भावयेत्
अनेन कल्पेन भिषक् पाययेत्तु यथाबलम् १२
मदनस्य फलान्येव पुनरुद्धारयेद् भिषक्
यथा स्युर्नातिपाण्डुनी तथैव हरितान्यपि १३
परिपूर्णानि पक्वानि तथा जातरसानि च
सूच्या वा कण्टकैर्वाथ व्यधयित्वा समन्ततः १४
मदनानां कषायेण त्रिरात्रं भावयेद् भिषक्
एतेनैव च कल्पेन जीमूतकफलैरपि १५
इक्ष्वाकुकुटजानां तु धामार्गवफलैरपि
कृतवेधैर्हस्तिपर्णैश्छर्दयेत्तेन साधुना १६
स खल्वेतेन कल्पेन कुशानां वरुणस्य च
काकोदुम्बरिकायाश्च कुष्ठाख्यायास्तथैव च १७
एकैकस्य कषायेण सुस्निग्धं पाययेद् भिषक्
बलाबलमवेक्ष्य - - -

इति भेले कल्पे प्रथमोऽध्यायः

तृतीयोऽध्यायः

अथातो इक्ष्वाकुकल्पं व्याख्यास्याम इति ह स्माह भगवानात्रेयः

इक्ष्वाकुसंग्रहकालः

इक्ष्वाकूरण्यूद्धरेद्धीमान् वसन्तेऽथ शरद्यपि
यदा प्रपुष्पितानि स्युर्मधुगन्धीनि वान्ति च १

इक्ष्वाकुप्रयोगविधिः

तेषां क्रियां प्रवक्ष्यामि इक्ष्वाकूणां यथाविधि
इक्ष्वाकुभिः पयस्सिद्धं तेनैवं वामयेद् भिषक् २
पयसा दधि कृत्वा वा पाययेत्तु यथाबलम्
निर्मथ्य वामयेच्चैनं नवनीतेन वा नरम् ३
विहिता चेक्ष्वाकुष्वेषा समाख्याता क्रिया मया
वृन्तान्यार्द्राणि चादाय स्थापयेत्फाणितोदरे ४
एकरात्रस्थितान्यत्र हस्तौ प्रक्षाल्य मर्दयेत्
परिस्रुतं सलवणं मधुयुक्तं प्रताप्य च ५
पाययेदातुरं स्निग्धं छर्दयेत्तेन साधु सः
एतेनैव च कल्पेन इक्षुदर्भेक्षुवारिकैः ६
तथा पोटगलेक्षोश्च कारयेत्तु रसाप्लुतम्
अथवा कोविदारस्य पत्रैस्सम्मिश्रितानि तु ७
इक्ष्वाकूणां पल्लवानि स्वेदयेद्गोमयाग्निना
तानि स्विन्नानि चोद्धृत्य क्षोदयित्वा ह्यूलूखले ८
ततः फलकषायेण स्वभ्यासिच्य समस्य च
एकरात्रं कषायेऽस्मिन् स्वनुगुप्तं निधापयेत् ९
पूर्वकल्पविधानेन वामयेत्तं यथाबलम्
इक्ष्वाकूणां प्रसृतं च सूक्ष्मं चूर्णानि कारयेत् १०
कोविदारकषायेण गुलिकाः कारयेद्भिषक्
एतेनैव कषायेण विनीय गुलिकान्तु ताम् ११
यथाबलं पाययेत्तु छर्दयेत्तेन साधु सः

एतेन खलु कल्पेन कुशानां तगरस्य च १२
एकैकस्य कषायेण सुस्निग्धं वामयेद्भिषक्
यथाबलं यथोद्दिष्टं छर्दयेत्तेन साधु सः १३
इक्ष्वाकुभिः पयस्सिद्धं पाययेत्तु यथाबलम्
इक्ष्वाकूणामयं कल्पो वमनार्थाय कीर्तितः १४
मृदुरभ्यासतस्सिद्धः प्रयोज्यो देशकालतः १५
इत्याह भगवानात्रेयः

इति भेले कल्पस्थाने तृतीयोऽध्यायः

## चतुर्थोऽध्यायः

अथातो धामार्गवकल्पं व्याख्यास्याम इति ह स्माह भगवानात्रेयः

### धामार्गवसंग्रहविधिः

धामार्गवान्युद्धरेत वसन्ते वा शरद्यपि
यदा प्रपुष्पितानि स्युः मधुगन्धीनि भान्ति च १
समे भूमिप्रदेशेऽस्मिन् कुशरोहिषसंस्कृते
कृष्णमृत्स्नाप्रभे वापि ह्यथवा स्वर्णमृत्तिके २
व्यातपे न नदीतीरे श्वभ्रवल्मीकयोस्तथा
परिपूर्णानि पक्वानि तथा जातरसानि च ३
भिषगुद्धृत्य मतिमान् यवपल्ले निधापयेत्
बुसपल्लेऽथ वा धीरः सप्तरात्रं निधापयेत् ४

### धामार्गवप्रयोगविधिः

सुभावितानि विज्ञाय मृदुभूतानि शास्त्रवित्
जर्जरीकृत्य दृषदि पात्रेष्वासिच्य निर्हरेत् ५
कोविदारकषायेण रात्रिमेकां निधापयेत्

अथ चोत्थाय पूर्वाह्णे हस्तौ प्रक्षाल्य मर्दयेत् ६
परिस्रुतं सलवणं मधुयुक्तं प्रताप्य च
पाययेदातुरं स्निग्धं छर्दयेत्तेन साधु सः ७
धामार्गवाणामेतेषां मुष्टिं संगृह्य सन्नखम्
जर्जरीकृत्य दृषदि पात्रेष्वभ्यवहारयेत् ८
कोविदारकषायेण रात्रिमेकां निधापयेत्
पूर्वोक्तेनैव कल्पेन वामयेत्तु यथाबलम् ९
नलदस्य कषायेण तालीसशतपुष्पयोः
कुष्ठस्य मूर्वापाठायाः पूर्वकल्पेन छर्दयेत् १०
धामार्गवाञ्जलिं पूर्णं सूक्ष्मचूर्णानि कारयेत्
श्यामाकषाये प्रक्षिप्य चैकरात्रं यथाविधि ११
तथा फलकषायेऽस्मिन्निक्ष्वाकुकृतवेधने
जीमूतके हस्तिपर्णे कषाये परिभावयेत् १२
तत उद्धृत्य संशोष्य सूक्ष्मचूर्णानि कारयेत्
कृसरां तेन संयुक्तां नात्युष्णां पाययेन्नरम् १३

आघ्राणवमनयोगः

उत्पलं पुण्डरीकं च नलदं कुमुदं तथा
तेन चूर्णेन संस्पृश्य घ्रातुमस्मै प्रदापयेत् १४
सिराहृदयमाप्नोति यावत्तत्किल मिश्रकम्
त्वरितं तानि पुष्पाणि घ्रातुमस्मै प्रदापयेत् १५
घ्रातुं पुनः पुनर्मध्यं चूर्णयित्वा मुहुर्मुहुः
अनेनैव च कल्पेन सुखं वमति मानवः १६

धामार्गवगुटिकाः

धामार्गवाञ्जलिं पूर्णं सूक्ष्मचूर्णानि कारयेत्

त्रिधा विभज्य मतिमान् स्वनुगुप्तं निधापयेत्  १७
अथ बिल्वकषायेण द्वौ भागौ श्च्योतयेद्भिषक्
च्युते कषाये विमले स्वनुगुप्तं निधापयेत्  १८
भागं तु गुलिकाः कार्याः कोलकर्कन्धुसम्मिताः
कोविदारकषायेण पूर्वकल्पेन छर्दयेत्  १९
कर्कन्धुबदराणां च कोलानां वापि सीधुना
गुलिकां विनीय विधिवच्छर्दयेत्तेन साधु सः  २०
रोहितस्य च मत्स्यस्य तथा कर्कटकस्य च
पक्षिणामौदकानां च रसेन तु वमेत्सुखम्  २१
एतेन खलु कल्पेन चाम्लैश्च मधुसीधुभिः
गुलिकां विनीय विधिवत् पाययेत्तां यथाबलम्  २२
इत्याह भगवानात्रेयः

इति भेले चतुर्थोऽध्यायः

## पञ्चमोऽध्यायः

अथातः कुटजकल्पं व्याख्यास्याम इति ह स्माह भगवानात्रेयः

### कुटजसंग्रहक्रमः

वसन्ते वा शरदि वा कुटजान्युद्धरेद् भिषक्
शुचिश्शुद्धश्शिरःस्नातः पुष्येणाश्वयुजेन वा  १
प्ररूढानि शुचौ देशे कुशरोहिषसंस्कृते
कृष्णमृत्स्नाप्रभे वापि तथा वा स्वर्णमृत्तिके  २
व्यातपे न नदीतीरे श्वभ्रवल्मीकयोस्तथा
परिपूर्णानि पक्वानि तथा जातरसानि च  ३

### कुटजप्रयोगभेदाः

कुटजानामथैतेषां मुष्टिं सङ्गृह्य सन्नखम्
कोविदारकषायेण रात्रिमेकां निधापयेत् ४
अथ चोत्थाय पूर्वाह्णे हस्तौ प्रक्षाल्य मर्दयेत्
परिस्रुतं सलवणं मधुयुक्तं प्रताप्य च ५
पाययेदातुरं स्निग्धं छर्दयेत्तेन साधु सः
अनेनैव च कल्पेन कषायं कारयेद् भिषक् ६
कोविदारस्य बीजैश्च नीपस्य विदुलस्य च
गुलूच्याश्च सुषव्याश्च पटोलपिचुमन्दयोः ७
कृत्वा मधूलिकायाश्च कषायं तेन छर्दयेत्

गुलिकायोगः

एषामेव फलानान्तु मुष्टिं संगृह्य सन्नखम् ८
मधुकस्य कषायेण तच्चूर्णं परिमर्दयेत् ९
गुलिकाः कारयेत्तेन कर्कन्धुबदरोपमाः
कोविदारकषायेण पूर्वकल्पेन छर्दयेत् १०
यथाबलं यथोद्दिष्टं छर्दयेत्तेन साधु सः

कृतवेधनकल्पोपसंहारः

कृतवेधनकल्पोऽयमुक्तो वमनविस्तरे ११
य एवंसम्प्रजानाति स राज्ञां कर्तुमर्हति १२
इत्याह भगवानात्रेयः

इति भेले कल्पस्थाने पञ्चमोऽध्यायः

षष्ठोऽध्यायः

अथातश्चतुरङ्गुलीयं कल्पं व्याख्यास्याम इति ह स्माह भगवानात्रेय

चतुरङ्गुलप्रयोगभेदाः

मनोज्ञदेशजातस्तु यो भवेच्चतुरङ्गुलः
फलमुष्टिं समाहृत्य ततश्चूर्णानि कारयेत् १
तच्चूर्णितं त्रिधाकृत्य भागमेकं निधापयेत्
द्वौ भागौ च शुचिस्सम्यक् कृत्वा मन्थनमेव तु २
श्च्योतयित्वा परिस्रुत्य सुप्रसन्नमनाविलम्
परिभागं समावाप्य साधयेद्गोमयाग्निना ३
तस्मिंस्तथा सिच्यमाने सूक्ष्माणीमानि दापयेत्
हरीतकीमामलकं विभीतकफलानि च ४
मधूकभागमावाप्य तद्विलेपनमाहरेत्
ततः पाणितलं चूर्णं लेह्यं तेन विरिच्यते ५
एतेनैव च कल्पेन कण्टकार्याः फलैरपि
श्च्योतयित्वा लेहजातं परितः सासवं पिबेत् ६
चतुरङ्गुलसिद्धा वा पेया योज्या सुसंस्कृता
विरिच्येत तेन साधु नायोगो नातियोगिता ७

खण्डामलकम्

धात्रीफलरसद्रोणे शर्करार्धतुलां पचेत्
घृतं चतुष्पलं पक्वं पृथगर्धपलं क्षिपेत् ८
नतं वेल्लं चतुर्जातं यष्टिसैन्धवजीरकम्
पलाशं विश्वमरिचं मृद्वीकायाश्चतुष्पलम् ९
प्रस्थं कणात्रिवृतयोर्मधुनश्च निहन्ति तत्
तत्खण्डामलकं नाम पाण्डुश्वयथुकामिलाम् १०
शिरोभ्रमणमुन्मादमम्लपित्तविकारजित् ११

भल्लातकयोगः

भल्लातकानां पवनाहतानां वृन्तच्युतानामिह चाढकं स्यात्

तदिष्टकाचूर्णकणैर्विघृष्य प्रक्षालयित्वा विसृजेत्प्रवाते १२
शुष्कं पुनस्तद्विदलीकृतं च विनिक्षिपेदप्सु चतुर्गुणासु
पादावशिष्टं परिपूतशीतं क्षीरेण तुल्येन पुनः पचेत १३
तत्पादशिष्टं पुनरेव शीतं घृतेन तुल्येन पुनः पचेत
तदर्धया शर्करयावगाढं लोहाभयाव्योषकचूर्णयुक्तम् १४
एतत्समं शार्करपादयुक्तं ततः खजेनोन्मथितं निधाय
प्रस्थद्वयेनामलकीमधूनां शीतेऽथ धान्येन पुनः पचेत १५
तत्सप्तरात्रादुपजातवीर्यं सुधारसादप्यधिकत्वमेति
प्रातर्विशुद्धीकृतदेहभाजां मात्रां ददीतात्मशरीरयोग्याम् १६
न चान्नपाने परिहार्यमास्ते न चोष्णवाताध्वनि मैथुने च
जन्तुर्नितान्तं नरसिह्मवत्स्याद्भवेन्नरः काञ्चनराशिगौरः १७
दन्ताश्च शीर्णाः पुनरुद्भवन्ति केशाश्च शुक्लाः पुनरेव कृष्णाः
विशीर्णकर्णाङ्गुलिनासिकोऽपि कृम्यर्दितो भिन्नगलोऽपि कुष्ठी १८
सोऽपि क्रमेणाङ्गुलिगात्रशाखस्तरुर्यथा रोहति वारिसिक्तः
महामयूराञ्जयति स्वरेण बलेन नागांस्तुरागन् जवेन १९

## सुधाकल्पप्रयोगाः

सुधाक्षीरेण भावयेत्
तत्पिबेत्तु यथोत्साहं तेन साधु विरिच्यते २०
दन्त्यक्षता तु तेजोह्वा तर्कारी सुदुरालभा
कषायक्वाथ इत्येतत्सुधाक्षीरेण मिश्रयेत् २१
तत्पिबेत्तु यथोत्साहं तेन साधु विरिच्यते
सुधाक्षीरेण गोक्षीरमेकस्थमभिसंसृजेत् २२
तत्पिबेत्तु यथोत्साहं तेन साधु विरिच्यते
कृतमूत्रपुरीषस्य वाते चाप्यनुलोमिते २३
प्रथमं स्निग्धकोष्ठस्य स्विन्नस्य च यथाविधि

सन्ध्यावेलामतिक्रम्य विमले च दिवाकरे
मैत्रे मुहूर्ते व्यक्ते तु योगानेतान् प्रयोजयेत् २४
इत्याह भगवानात्रेयः

इति भेले कल्पस्थाने षष्ठोऽध्यायः

## सप्तमोऽध्यायः

अथातो दन्तीफलकल्पं व्याख्यास्याम इति ह स्माह भगवानात्रेयः
त्रिधा विभज्य मतिमान् स्वनुगुप्तं निधापयेत्
रसेनामलकस्यापि द्वौ भागौ श्च्योतयेद्भिषक् १
च्युतं कषायं विमलं परियोगमधिश्रयेत्
तस्मिंस्तथा पच्यमाने तच्चूर्णमभिसंसृजेत् २
तन्मात्रं त्रिफलाचूर्णमावपेन्मधुसंयुतम्
लेहभूतं विदित्वैनमथैनमवतारयेत् ३
तस्य पाणितलं चूर्णं लेह्यं तेन विरिच्यते
एतेषां चैव मूलानां कृत्वा चूर्णानि सूक्ष्मशः ४
श्यामाकषायेणालोड्य घृतं सिद्धं विपाचयेत्
जानीयात्तद्यदा सिद्धमथैनमवतारयेत् ५
तद्दृढे मधुलिप्ते तु नवे कुम्भे समावपेत्
मृत्स्नाभिः स्वनुलिप्ते तु स्वनुगुप्तं निधापयेत् ६
प्रसृतं पाययेत्तत्र तेन साधु विरिच्यते
एतेषां चैव मूलानां कृत्वा चूर्णानि सर्वशः ७
बृहतीरससम्मिश्रैः गुलिकां कारयेत्तु तैः
गुलिकां कारयित्वा तु कर्कन्धुबदरोपमाम् ८
श्यामाकषायेणालोड्य द्वे वा तिस्रोऽपि वा ततः
पाययेत्तु यतोत्साहं तं स्निग्धस्वेदितं नरम् ९

विरिच्यते तेन साधु नायोगो नातियोगिता

स्निग्धस्यैव शोधनम्

स्नेहादिं स्नेहमूलं तु प्रच्छर्दनविरेचनम्
नापरिस्निग्धकोष्ठस्य प्रसिध्यति विशोधनम् १०
इत्याहं भगवानात्रेयः

इति भेले कल्पस्थाने सप्तमोऽध्यायः

अष्टमोऽध्यायः

अथातः शङ्खिनीकल्पं व्याख्यास्याम इति ह स्माह भगवानात्रेयः

शङ्खिनीसंग्रहादिविधिः

फलानि परिपक्वानि शङ्खिन्यास्तूद्धरेद्भिषक्
अन्तरा चैत्रवैशाखमव्यग्रो यवसंग्रहे १
अनूषरे निरूद्धारे क्षेत्रे सूर्यप्रतापिते
कृष्णमृत्स्नाप्रभे वापि तथा च स्वर्णमृत्तिके २
न व्यग्रे न च वल्मीके न चापि तृणछादिते
सुसमे भूप्रदेशे तु या जाता शङ्खिनी भवेत् ३
तस्या द्रोणं समावाप्य तद्भाराडं सिद्धबन्धनम्
यवपर्णोषितं चापि समुद्धृत्य निधापयेत् ४
सप्तरात्रं वार्धमासं समाच्छाद्य समन्ततः
आतपे परिशुष्काणि सूक्ष्मचूर्णानि कारयेत् ५

शङ्खिनीतैलम्

फलानामथ चैतेषां द्वौ भागौ कारयेद्भिषक्
तिलं तृतीयकं कृत्वा क्षोदयित्वा ह्युलूखले ६
सम्यग् दृषदि निष्पिष्य तैलमुद्धारयेत्ततः

शङ्खिन्या ह्यक्षमात्रं तु त्रिवृत्कल्कमथापि वा ७
तस्मिंस्तैले पयश्चैव भिषग्दद्याच्चतुर्गुणम्
एतत्सर्वं समालोड्य पाचयेन्मृदुनाग्निना ८
पक्वमाहृत्य विस्राव्य स्वनुगुप्तं निधापयेत्
तस्याञ्जलिं प्रकुञ्चं वा प्रसृतं वापि पाययेत् ९
विरिच्यते तेन साधु नायोगो नातियोगिता

शङ्खिनीघृतम्

सुसूक्ष्मस्याथ शङ्खिन्याश्चूर्णस्य प्रसृतं शृतम् १०
क्षीरपात्रेण संयोज्य परियोगमधिश्रयेत्
तथा विपाच्य विस्राव्य शीतीकृत्याभिमन्थयेत् ११
तत्र यन्नवनीतं स्यात्तदुद्धृत्य विपाचयेत्
शङ्खिनीफलकल्केन क्षीरेण सलिलेन च १२
स पिबेत्तधथोत्साहं तेन साधु विरिच्यते

शङ्खिनीप्रयोगभेदाः

शङ्खिनीफलकल्कन्तु सम्यक् दृषदि पेषयेत् १३
गोक्षीरेण समालोड्य पिबेत्तेन विरिच्यते
एतेनैव च कल्पेन ह्युष्ट्रीक्षीरेण पाययेत् १४
अजाक्षीरेऽविकाक्षीरे माहिषे वाथ वा पुनः
गोमूत्रेणोष्ट्रमूत्रेण चाविमूत्रेण वा पुनः १५
अथवा हस्तिमूत्रेण पिबेत्तेन विरिच्यते
आमृद्नन्नथ मृद्वीकां दापयेत्फाणितोदके १६
भृष्ट्वा तु शङ्खिनीतैले परियोगमधिश्रयेत्
अर्धं चूर्णानि पिप्पल्या हरीतक्याश्च दापयेत् १७
अतः पाणितलं प्राश्य तेन साधु विरिच्यते

शङ्खिनीफलमध्यानि दातव्यं लवणं तथा १८
शङ्खिनीतैलभृष्टानि फाणितेनाथ संसृजेत्
गोधूमाज्येन संसृज्य मोदकान् कारयेद्भिषक् १९
तांस्त्रीन् द्वौ वाथ संभक्ष्य ततस्साधु विरिच्यते
सुरां सौवीरकं तक्रं दधिमस्तु तुषोदकम् २०
कट्वरं कोलसीधुं वा दधि पक्वरसं तथा
कर्कन्धुबदराणां वा सीधुं पीलुप्रियालयोः २१
भव्यपारावतानां च मृद्वीकामद्यमेव वा
बिल्वशिग्रुकपित्थानां रसान्वा सह पाययेत् २२
अयं हि शङ्खिनीकल्पो मया तु समुदाहृतः
य एवं सम्प्रजानाति स राज्ञां कर्तुमर्हति २३
इत्याह भगवानात्रेयः

इति भेले कल्पस्थानेऽष्टमोऽध्यायः

## नवमोऽध्यायः

अथातः श्यामात्रिवृत्कल्पं व्याख्यास्याम इति ह स्माह भगवानात्रेयः

### श्यामात्रिवृत्सम्पादनं प्रयोगाश्च

श्यामायास्त्रिवृतायाश्च मूलान्युद्धारयेद्भिषक्
कल्याणदेशजातायाः कुशरोहिषसंस्कृते १
कृष्णमृत्स्नाप्रभे वापि ह्यथवा स्वर्णमृत्तिके
मूलान्येतानि संगृह्य सूक्ष्मचूर्णानि कारयेत् २
स्थिराकषाये संसृज्य पाययेत्तु यथाबलम्
विरिच्यते तेन साधु नायोगो नातियोगिता ३
त्रिफलारसमात्रेण द्राक्षापीलुरसेन वा

आलोड्य वापि पयसा सर्पिषा वापि पाययेत् ४
हरिणस्य रसं दद्यान्नयङ्कोश्च महिषस्य च
खड्गस्य कलविङ्कस्य तित्तिरेर्लावुकस्य च ५
रसमन्यतमं तेषां त्रिवृच्छयामाप्रयोजितम्
यथाबलं पाययेत्तु सुस्निग्धं स्वेदितं नरम् ६
श्यामायास्त्रिवृतायाश्च कृत्वा चूर्णानि सूक्ष्मशः
त्रिधा विभज्य तत्रैकं स्वयं गुप्तं निधापयेत् ७
रसेन तु प्रियङ्गूणां द्वौ भागौ श्च्योतयेद्भिषक्
भाजने तु परिस्राव्य सुप्रसन्नमनाविलम् ८
परियोगमधिश्रित्य पाचयेन्मृदुनाग्निना
तस्मिंस्तथा पच्यमाने चूर्णान्येतानि धापयेत् ९
प्रियङ्गुं तगरं चैव तालीसं नलदं तथा
ह्रीबेरं चैव मुस्तां च बलां कालानुसारिवाम् १०
अशोकपुष्पचूर्णानि पद्मसौगन्धिकानि च
नलिनं पुण्डरीकं च पिप्पलीमूलमेव च ११
मधुना सह संसृज्य लिह्यात्पाणितलोन्मितम्
सुस्निग्धो जीर्णभक्तश्च यथाशास्त्रं यथाबलम् १२
विरिच्यते तेन साधु नायोगो नातियोगिता

कल्पान्तराणि

चन्दनं पद्मकं नीपं सालं सप्तच्छदं तथा १३
पुनर्नवां तु पललं किरातं तिक्तमेव वा
ये चान्ये तिक्तमधुरा रसाः पूर्वं प्रकीर्तिताः १४
तेषां कषायैर्योज्यं स्यात्पैत्तिकानां विरेचनम्
पारावतान् कपोतांश्च क्रोञ्चबर्हिणकुक्कुटान् १५

कुरङ्गान् हरिणानेणान् हरितान् कालपुच्छकान् १६
रसैस्तैरुपयुञ्जीत पैत्तिकस्य विरेचनम्
साराः फलानि चूर्णानि पत्राणि च पयांसि च १७
य उक्ताः स्थावराः पूर्वं तथैव मृगपक्षिणः
पानानि फलनिष्क्वाथकषायादिद्रवान् रसान् १८
लेह्यान् भक्ष्यांश्च सान्नादीन् तेभ्यः समभिकल्पयेत्
परूषकस्य द्राक्षाया रसं समधुशर्करम् १९
त्रिवृदक्षसमायुक्तं पीत्वा साधु विरिच्यते

त्रिवृन्मोदकलेहकल्पाः

साधयेच्छर्करायुक्तं सहैव मधुना भिषक् २०
शीते तस्मिंस्त्रिवृच्चूर्णं यथाकोष्ठं समावपेत्
ततः कम्पिल्लकाच्चूर्णं द्वे च ते तिन्दुकस्य च २१
आरग्वधफलान्मध्यभागाश्चाक्षसमास्तथा
त्रिवृच्चूर्णस्य धरणं शर्करा मधुकं मधु २२
मरिचं नागपुष्पं च त्वक्पत्रं च सुचूर्णितम्
एतत्सर्वं समायोज्य मोदकं कारयेद्भिषक् २३
अथ वा कारयेल्लेहं तेन साधु विरिच्यते

विविधकल्पाः

द्राक्षारसस्य कुडवं परुषकरसस्य च २४
मधुनः कुडवार्धं च शर्करापलमेव च
त्रिवृच्चूर्णकृतो लेहस्तेन साधु विरिच्यते २५
एतदुत्सन्नदोषाणामीश्वराणां विरेचनम्
शर्करामोदकं वापि गुडकं माषपूरकम् २६
अनेन विधिना कुर्यात् पैत्तिकानां विरेचनम्

त्रिवृच्चूर्णानि पिप्पल्याः फलाचारग्वधस्य च २७
कल्कानद्म समानेतान् पिबेद्धीरो विरेचनम्
त्रिवृच्चूर्णस्य धरणं शर्करा मधुकं मधु २८
एतदद्मसमायुक्तं पीत्वा साधु विरिच्यते
त्रिवृच्चूर्णानि पिप्पल्यो यवद्मारो महौषधम् २९
श्लेष्मकोपशमार्थाय लिह्यात्तेन विरिच्यते
अविमूत्रमजामूत्रमुष्ट्रस्य महिषस्य च ३०
मृगस्य मूत्रं गोमूत्रं गर्दभस्य द्विपस्य च
एतान्यष्टौ प्रयुञ्जीत पृथग्वा यदि वा सह ३१
त्रिवृच्चूर्णविमिश्राणि विलिह्यान्मधुनापि वा
अजातानि च मद्यानि तीद्मणानि निशि तानि च ३२
त्रिवृच्चूर्णविमिश्राणि पीत्वा साधु विरिच्यते
त्रिवृच्चूर्णं यथाकोष्ठं श्लैष्मिकः पातुमर्हति ३३
त्रिवृतायाः कषायेण सद्मौद्रं साम्लवेतसम्
अथ वा दधिमण्डेन कोलकानां रसेन वा ३४
कुलत्थमुद्गयूषैर्वा सतीनचिरबिल्वयोः
यवकोलकयूषेण पिबेत्कौलत्थमेव वा ३५
युक्तं वा तैन्त्रिणीकेन साम्लवेतसदाडिमम्
यूषेण शिग्रुकोलाह्वामूलकानां रसेन वा ३६
रसेनामलकानां वा बीजपूरार्जकस्य वा
कपित्थरसमण्डेन करमर्दरसेन वा ३७
यच्चान्यदपि वा किञ्चित्फलमम्लमिति स्मृतम्
पिबेत्तत्स्वरसैर्वापि पञ्चमूलीरसेन वा ३८
कटुकल्कविमिश्रं वा यवद्मारेण संयुतम्
मृद्वीकाफलकल्केन लेहार्थमुपकल्पयेत् ३९

प्रत्येकस्य फलानां च पूर्वोक्तानां चिकित्सकः
सुजातानां सुपक्वानां प्रत्यग्रं ग्राहयेद्रसम् ४०
लेहेऽस्मिन् त्रिवृता चूर्णं यथाकोष्ठं समावपेत् ॥
सक्षौद्रं सगुडं वापि लिह्यात्सकटुकं तथा
एतेन विधिना कुर्यान्मोदकान् षाडवान् रसान् ॥
पानानि च फलाम्लानि भक्ष्यं भोज्यं च संस्कृतम्
एतद्राज्ञां समाख्यातमीश्वराणाम् विरेचनम् ॥
विधिमेवमिमं चान्यं प्रयुञ्जीत चिकित्सकः ॥

आमलकादिमोदककल्पाः

तत्राम्ललवणीभूते विरिप्यात्सैन्धवे भवेत्
लेहेऽस्मिन् त्रिवृतश्चूर्णं यथाकोष्ठं समावपेत् ४१
सक्षौद्रं सगुडं वापि लिह्यात्सकटुकं तथा
एतेन विधिना कुर्यान्मोदकान् षाडबान्रसान् ४२
पानानि च फलाम्लानि भक्ष्यं भोज्यं च संस्कृतम्
एतद्राज्ञां समाख्यातमीश्वराणां विरेचनम् ४३
विधिमेवं प्रयुञ्जीत त्विमं चान्यं चिकित्सकः
शाणमामलकानां च विभीतकफलानि च ४४
तिल्वकस्सप्तला दन्ती शङ्खिनी चतुरङ्गुलः
हरीतकीनामेकं च यवक्षारो वचैव हि ४५
पिप्पलीनां च शाणस्स्याद्विडङ्गाच्छाण एव च
त्रिवृच्चूर्णस्य त्रिश्शाणास्तत्सर्वमवचूर्णयेत् ४६
तानि चूर्णानि मधुना सर्पिषा वा गुडेन वा
लेहं वा विधिना --- ४७

इति भेलसंहितायां कल्पस्थानं समाप्तम्

# सिद्धिस्थानम्

## प्रथमोऽध्यायः

### रिक्तकोष्ठस्य वमने व्यापदः

रिक्तकोष्ठस्य वमने मारुतः सम्प्रकुप्यति
प्लीहा प्रचलति स्थानात्तस्माद्दोषान्निहन्त्यसून्  १

### शोधनौषधप्रयोगक्रमः

पेयां मण्डं पिबेत्तस्मात्सुस्निग्धं लवणान्वितम्
सौम्ये तिथौ मुहूर्ते च नक्षत्रे करणे शुभे  २
शुक्लवस्त्रः शुचिर्भूत्वा ह्यर्चयित्वा द्विजन्मनः
ततोऽस्मै वमनं देयं पूजयित्वा भिषग्वरान्  ३
प्राङ्मुखेन तु पातव्यं निवाते शरणे शुभे
न चास्य कुर्यादायासं मण्डं भोज्यं प्रशस्यते  ४
विधिरेष भवेत्कार्यो वमने च विरेचने

### वमनक्वाथमात्रा

निष्क्वाथस्य त्रयः प्रस्थाः मागधास्तु कनीयसि  ५
ज्येष्ठे तु पुरुषे ज्येष्ठं वमनं न कनीयसि
चतुःप्रस्थं तु मध्यं स्याज्ज्येष्ठं प्रस्थास्तु ते नव  ६
कनीयो मध्यमं ज्येष्ठं त्रिविधानि पृथक् पृथक्

### अपीतपूर्वविषये वमनमात्राविशेषः

अपीतपूर्वं वमनं विरेको वापि येन तु  ७
कनीयसा प्रमाणेन परीक्षेत च बुद्धिमान्
त्रिपलं श्रेष्ठमाख्यातं कनीयस्तु पलं भवेत्  ८
मध्यमं द्वे पलै विद्यादिति मे निश्चिता मतिः

विषयभेदेन मात्राभेदाः

विषकुष्ठहता ये तु कासश्वासप्रपीडिताः ९
तरुणा बलवन्तश्च वामयेदुत्तमेन तान्
मध्यमे प्राणवयसि मध्यमं तत्र कारयेत् १०
कनीयसि कनीयस्तु तथा प्राणे कनीयसि
विपरीतं प्रयुञ्जानो न रोगान्विजयिष्यति ११
उपद्रवान्वा जनयेदातुरं वा विनाशयेत्

वमनयोगाः

अङ्कोलस्याथ निम्बस्य निष्क्वाथं साधु योजयेत् १२
सर्पिषा भेषजैश्चेमैः सुखोष्णं शीतमेव वा
मदनस्य फलं पिष्ट्वा देवदालीफलैस्सह १३
निम्बपत्राणि सार्द्राणि सैन्धवं मरिचानि च
सैन्धवेन समायुक्तं तक्रमण्डेन वा पुनः १४
बन्धुजीवोऽथ पिप्पल्यो मदनं सर्पिरेव च
तत्कषायेण संयुक्तं प्रधानं वमनौषधम् १५
मदनं बन्धुजीवश्च शतपुष्पा शुकानना
सैन्धवेन समायुक्तं प्रधानं वमनौषधम् १६
मदनस्य च पत्राणि पुष्पाणि सफलानि च
सैन्धवं बन्धुजीवश्च राजकोशातकानि च १७
एवं प्रच्छर्दनो योगः प्रधानं वमनौषधम्
श्रेष्ठश्च विषयुक्तेषु कासश्वासे तु पूजितः १८

वमनायोगे छर्दनोपायाः

यदा तु वमनं पीतं न छर्दयति मानवम्
किं तत्र भेषजं कुर्यात् कथं वैद्यः समाचरेत् १९

दर्शयेत्तस्य तु भिषक् पालितानि पृथक् पृथक्
मक्षिकाकेशचूर्णानि तच्च मण्डे नियोजयेत्  २०
एतेन तु प्रयोगेण क्षिप्रं छर्दयते नरः
एषा क्रिया समाख्याता दुर्बलानां विशेषतः  २१

प्रवृत्तवेगे उपचारः

हृदयं पृष्ठदेशं च विगृह्य च वमेन्नरः
तथास्य चलति स्थानात्पीतं ह्यस्मिन्नुपक्रमे  २२

वमने दोषनिर्गमक्रमः

कफं हि पूर्वं वमति ततः पित्तमनन्तरम्
पित्तस्यान्ते भवेद्वातः ततो वमति शोणितम्  २३

सम्यग्वान्तलक्षणम्

लक्षणानि तु वक्ष्यामि सम्यग्वान्तस्य देहिनः
लघुरामाशये शुद्धिर्हृच्छुद्धिश्चाप्यतन्द्रिता  २४
क्षुत्पिपासे यथाकालं स्रोतःशुद्धिर्यथाग्निता
श्लेष्मिकाणां च सर्वेषां व्याधीनां विनिवर्तनम्  २५
न च वैरस्यमास्यस्य सम्यग्वान्तस्य लक्षणम्

वमनातियोगलक्षणम्

हृल्लासोऽथ सिराहर्षो मन्या कण्ठश्च दीर्यते  २६
अत्युद्गारस्तमः कासो हिक्का श्वासः स्वरक्षयः
वातज्वरः शुष्कवमिस्तृष्णा शूलो ह्यनिद्रता  २७
आस्यहृच्छोषणं चैव क्षताच्च रुधिरागमः
इन्द्रियाण्युपरुध्यन्ते मूर्च्छा चायोपजायते  २८
हनुस्तम्भश्च कम्पश्च ह्यतिवान्ते प्रवर्तते

अवम्या वम्याश्च

ऊर्ध्वरक्ती प्रमेही च गुल्मी चार्शोभगन्दरी २९
उदरी पाण्डुरोगी च हृद्रोगी कृमिकोष्ठकः
अपस्मारी विषार्तश्च शोफस्तम्भश्च वातिकः ३०
विषमज्वरवीसर्पी वातशोणितिकश्च यः
अर्शोऽतिविषमाग्निश्च कुष्ठश्वयथुपीडितः ३१
उदावर्ती तथोन्मादी पिप्लुव्यङ्गनिपीडितः
पित्तश्लेष्मसमुत्थानां व्याकुला ये च धातवः ३२
सन्निपातसमुत्थाश्च योनिदुष्टाश्च याः स्त्रियः
शूलार्ता रक्तगुल्मिन्यो याश्च सौम्येन पीडिता ३३

सम्यग्विरिक्तलक्षणम्

अस्निग्धारक्तताङ्गानां लाघवं गात्रमार्दवम्
हृदयोद्गारमूत्राणां शुद्धिर्वातानुलोमतः ३४
प्रसन्नस्वरवर्णत्वं बुभुक्षा व्याधिनिग्रहः
श्लेष्मणा च स्वयं स्थानं सुविरिक्तस्य लक्षणम् ३५

दुर्विरिक्तलक्षणम्

उदरं वातसम्पूर्णं कण्डूमण्डलसम्भवः
पिटकाजन्म गात्रेषु भ्रमणं ज्वरसम्प्लवः ३६
हृदयावेष्टनं वह्नेः सादस्स्यात्कुक्षिगौरवम्
कृच्छ्रविण्मूत्रवातत्वं दुर्विरिक्तस्य लक्षणम् ३७

अतिविरिक्तलक्षणम्

पार्श्वशूलं गुदभ्रंशः शाखासंकोचसम्भ्रमः
वातवृद्धिर्विसंज्ञत्वं गुदशूलस्तृषा क्लमः ३८
शून्यता जर्जरीभावस्ततश्चिमचिमायनम्

रूपारयतिविरिक्तानां शूलः शोफश्च जायते ३६

दुर्विरिक्तादीनामुपक्रमः

गौरवे दुर्विरिक्तस्य यदजीर्णं तदुल्लिखेत्
सात्म्यं तु पेयं भैषज्यं निरूहो गाढवर्चसाम् ४०
रूपारयतिविरिक्तस्य हरेत्क्षीरघृतादिभिः
स्नेहैश्चैवोपनाहैश्च साभ्यङ्गैश्च भिषग्जयेत् ४१

द्वितीयोऽध्यायः

अथ शिरोविरेचनस्सिद्धिर्द्वितीया

नस्यभेदाः

अवपीडानुवासाश्च धूमाः प्रधमनानि च
चतुर्विधं नस्यमाहुः पृथक्त्वेन तु मे शृणु १

शिरोविरेचनसाध्यव्याधयः

गलग्रहो रोहिणिका शङ्कोऽर्धावभेदकः
प्रतिश्यायश्च कासश्च श्वासो हिक्का बिडालिका २
मुखरोगो ह्यपस्मारो दन्ततालुकविद्रधी
दन्तपुप्पुटकश्चैव पूतिनासामुखं तथा ३
अभिष्यन्दाश्च चत्वारस्तन्द्रा ये नेत्रसंभवाः
सार्बुदाश्चाप्यधीमन्थाः नासार्शश्च भगन्दराः ४
उपजिह्वा गलग्रन्थिः कराठशालूक एव च
गलशुष्ठिकालसके कार्यं शीर्षविरेचनम् ५

शीर्षविरेचनद्रव्याणि

मरिचानि विलङ्गानि पिप्पल्योऽथ फणिज्जकः
क्षवको यवनश्चैव शिग्रुबीजं मयूरकः ६

हिङ्गु सौवर्चलं भार्ङ्गी नक्तमालफलानि च
ज्योतिष्मती शृङ्गिवेरं शैरीषं बीजमेव च  ७
एतच्छीर्षविरेकार्थमुक्तव्याधिषु योजयेत्
अवपीडेऽथ धूमे वा द्वन्द्वशः सर्वशोऽपि वा  ८
एतैरेवौषधगणैस्तैलं धीरो विपाचयेत्
अविमूत्रेण संयुक्तं श्रेष्ठं शीर्षविरेचनम्  ९
धूमं च सर्वगन्धानां नतकुष्ठविवर्जितम्
धूमवर्तिं पिबेत्तावच्छ्रेष्ठं शीर्षविरेचनम्  १०

शिरोविरेकगुणाः

शिरसस्तु विरेकेण कर्णजिह्वाक्षिनासिकाः
विशुध्यन्ते यथादोषं मुखनासावहेषु च  ११
विवृतिः खेषु विशदा न च श्लेष्मा प्रसिच्यते
सम्यक् शिरसि संशुद्धे वेदना चोपशाम्यति  १२
व्याधौ च भङ्गचूर्णत्वं स्रोतसां सुविशुद्धता

शोधनस्यातियोगे व्यापत्

तथैवातिविशुद्धेषु स्रोतस्स्वायस्यते शिरः  १३

तैलसर्पिर्नस्यार्हाः

दन्तचाले हनुस्तम्भे मन्यास्तम्भे शिरोग्रहे
बाधिर्ये कर्णशूले च कर्णमूलाक्षिभेदने  १४
अपतन्त्रे केशसादेऽप्रबोधे दृष्टिविभ्रमे  १५
गण्डोष्ठमुखचालेषु काचेषु तिमिरेषु च
दौर्गन्ध्ये मुखनासाभ्यां पालित्ये वाप्यकालजे  १६
ऊर्ध्वजत्रुगता ये च रोगास्सम्परिकीर्तिताः
नस्यकर्म हितं तेषां तैलं वा सर्पिरेव वा  १७

जीवकादिनस्ययोगः

जीवकर्षभकौ द्राक्षा पिप्पल्यो मधुकं बला
प्रपौण्डरीकं मेदा च शर्करा नीलमुत्पलम् १८
निदिग्धिका चांशुमती नीलिका सैन्धवं वचा
रास्ना श्वदंष्ट्रा मञ्जिष्ठा बृहती सपुनर्नवा १९
एभिः पलसमैः सिद्धं तैलं वा यदि वा घृतम्
चतुर्गुणेन पयसा नस्यं तत्परमुच्यते २०
नस्यतः स्नेहपानेन कृष्णारोमा दृढेन्द्रियः
अवलीपलितव्यङ्गः चक्षुष्माञ्जायते नरः २१
कर्णाक्षिनासावक्त्राणां स्नेहेनावृत्य तर्पणम्

स्नेहनावनसम्यग्योगलक्षणम्

इन्द्रियाणां विमुक्तत्वं प्रसादः स्वरवर्णयोः २२
स्रोतसां विमलत्वं च ज्ञेयं संस्निग्धलक्षणम्

नस्यास्निग्धलक्षणम्

अस्निग्धलिङ्गं रूक्षत्वं स्रोतसां रिक्तता तथा २३

नस्यातिस्निग्धलक्षणम्

शिरसो गुरुदःखत्वं स्रोतसां स्नेहपूर्णता
कर्णतालूपदेहश्च नस्यातिस्निग्धलक्षणम् २४

नस्यानर्हाः

नाजीर्णे नार्द्रशिरसि पन्थानं गन्तुमिच्छतः
न पीतमात्रे पानीये ज्वरितस्य न दापयेत् २५
न मैथुनं गतवतः मद्यपीतस्य नैव च
नातिभुक्तस्य नास्निग्धस्विन्नस्यानिर्वृतेस्तथा २६

निरूहस्य सम्यग्योगादिलक्षणानि

सम्यङ् निरूढस्य न रुग्रुजा सम्यक् प्रशाम्यति
यतो मूत्रपुरीषाभ्यां वातो ह्यस्य निवर्तते २७
निरूढं तं भिषग्विद्यादनिरूढस्य लक्षणम्
तथैव व्याधिराध्मानं शूलं विरामुत्रनिग्रहः २८
पूर्णकुक्षित्वमानाहो दुर्निरूढस्य लक्षणम्
निरूढस्य पुनर्यस्य शोणितं सम्प्रदुष्यति २९
अतीव तु निरूढस्य निष्पुरीषस्य मारुतः
शूलेनावेष्ट्यमानस्य सर्वगात्राणि पीडयेत् ३०
इति पञ्चविधं चोक्तं व्याख्यातं समुपाचरेत्
पञ्चकर्मविधानज्ञो राजार्हो भिषगुच्यते ३१
इत्याह भगवानात्रेयः

इति भेले द्वितीयोऽध्यायः

चतुर्थोऽध्यायः

अथातो दशव्यापदीयां वमनविरेचनसिद्धिं व्याख्यास्याम इति ह
स्माह भगवानात्रेयः

शोधनद्रव्यकल्पनानिर्देशः

अधोभागोर्ध्वभागानि भेषजानि प्रयत्नतः
कल्पयेन्मतिमान्वैद्यो विषशस्त्रानिभानि तु १
कटुतिक्तकषायाणि विदाहीनीतराणि च
सूक्ष्माण्युष्णानि तीक्ष्णानि विष्यन्दीनि गुरूणि च २

शोधनद्रव्याणां कार्मुकत्वप्रकारः

तानि सम्प्राप्य हृदयं धमनीः प्रतिपद्य हि

तिर्यगूर्ध्वमधश्चैव दोषान्निष्पन्दयन्त्यपि ३
सूक्ष्माच्छरीरावयवान् सौक्ष्म्यादनुसरन्ति च
विस्रावयन्ति धातूंश्च विमार्गैरपि देहिनाम् ४
आनयन्तीव हृदयं दोषांस्तानतिमूर्च्छितान्
आमाशयं पूरयित्वा ह्यूर्ध्वभागभवांस्तथा ५
एवमेव च विष्यन्दीन्यापूर्यामाशयं पुनः
अधोभागे प्रवर्तन्ते विकारेष्विह देहिनाम् ६
विष्यन्दयन्ति दोषांश्च यावत्तिष्ठन्ति देहिनाम्
संशोधयन्त्यतः पश्चादूर्ध्वं वा यदि वाप्यधः ७

शोधनविभ्रंशजा व्यापदः

तेषां तु दुष्प्रयुक्तानां विभ्रान्तानां विधावताम्
अयोगाच्चातियोगाच्च जायन्ते व्यापदे दश ८
परिस्रावस्तथाध्मानं विबन्धे गुदनिःस्रवः
हृद्रोगश्चैव शूलं च तथैव परिकर्तिका ९
जीवादानं शिरोरोगो दशमी च प्रवाहिका
तासामेकैकतस्सिद्धिं व्यापदां तु निबोध मे १०

वमनविरेचनायोगे उपक्रमः

अथैति पीतं वमनं तच्च तीक्ष्णतरं पिबेत्
अनुपानान्न सिद्धिश्च सशोध्यास्थापयेन्नरम् ११
असिध्यति विरेकेऽपि भूयस्तमनुवासयेत्
अस्मिन्नपि जरां याति त्र्यहादूर्ध्वं पिबेद् घृतम् १२
स्नेहस्वेदोपपन्नश्च लघु च प्रतिभोजितः
विरेचनं च वमनं नरस्तीक्ष्णतरं पिबेत् १३
यदा विरेचनं पीतं वमनायोपपद्यते

प्रयोग एवं वमने विरेकेऽपि च यः स्मृतः १४

दशव्यापदां निरूपणम्

स्नेहस्वेदविमुक्तं च क्रूरकोष्ठं च देहिनम्
अजीर्णे चौषधं पीतमाध्यापयति मानवम् १५
लङ्घितस्य सुभक्तस्य रूक्षस्यानशनस्य च
परिकर्तः परिस्रावः प्रलेपोऽस्वेदितस्य च १६
स्नेहस्वेदविमुक्तस्य मृदुकोष्ठस्य देहिनः
दोषास्तथावशिष्टास्तु जनयन्ति प्रवाहिकाम् १७
अतिरौक्ष्यादतिस्नेहादौषधानां न सम्भ्रमात्
नृणां शूलं प्रभवति गुदस्रंसश्च दारुणः १८
वमने रेचने वापि पीते वेगविधारिते
वातपित्तकफाः क्रुद्धाः कुर्वन्ति हृदयग्रहम् १९
तस्य गात्राणि सीदन्ति क्लमः शूलश्च दारुणः
शिरोग्रहश्च कोष्ठार्तिर्विसंज्ञश्च भवत्यपि २०
स्विन्नस्य मृदुकोष्टस्य स्नेहितस्य विरेचनम्
अतिमात्रौषधं पीतं जीवादानाय कल्पते २१
सृजेच्छुक्लं स शकृता कृष्णं वा रक्तमेव वा
लोध्रपुष्पसवर्णं वा भण्डपूष्पनिभं तथा २२
प्रविरिक्तो यदा शीतां क्रियां समुपसेवते
शरणानि च शीतानि वारि शीतं च सेवते २३
स्रोतांसि कुपितो वायुस्तस्य चावृत्य तिष्ठति
खरीभवति तेनास्य दोषाः स्कन्दन्ति देहिनः २४
वातमूत्रपुरीषाणामप्रवृत्तिस्तृषा ज्वरः
विबन्ध एष व्याख्यातो भिषजां बुद्धिविभ्रमात् २५
अस्निग्धं तु यदा रूक्षमौषधं पाययेद् भिषक्

गृह्णाति कुपितस्तस्य सर्वगात्राणि मारुतः २६
कटिपृष्ठशिरोग्रीवाहृदयं च यदानिलः
प्रपद्यते तदा मोहं चित्तनाशं च गच्छति २७
दशैता व्यापदः प्रोक्ता रूपैर्नानाविधैः पृथक्

अयोगजव्यापदां चिकित्सा

चिकित्सां तासु कुर्वीत यथात्रेयस्य शासनम् २८
तत्रायोगिनमभ्यज्य तैलेन लवणेन च
सङ्करप्रस्तरस्वेदैर्नाडीस्वेदैरथापि वा २९
सम्यङ्निरूढं विश्रान्तं परिषिच्य सुखाम्बुना
जाङ्गलेन रसेनैव भोजयेन्मृदुमोदनम् ३०
फलतैलेन कोष्णेन ततस्तमनुवासयेत्
आध्मानं परिकर्तश्च परिस्रावश्च शाम्यति ३१
सालो रूबूकस्त्रिफला दन्ती चित्रक एव च
सर्पिरेभिर्विपक्वं च पाययेच्च यथाबलम् ३२
तत्स्नेहपीतं सुस्निग्धं स्वेदकर्मोपपादितम्
वमनं रेचनं वापि पाययेत्तीक्ष्णमौषधम् ३३
हृद्रोगो गात्रहर्षश्च शीर्षस्कन्धग्रहस्तथा
विबन्धः परिकर्तश्च शूलश्चानेन शाम्यति ३४
परिकर्तः परिस्रावो यथातत्त्वेन शाम्यति
कषायबस्तिं प्रणयेत्पिच्छाबस्तिमथापि वा ३५
शृतं मधु घृतं वापि क्षीरबस्तिं प्रदापयेत्
जीवनीयोपसिद्धेन सर्पिषा चानुवासयेत् ३६
एरण्डमूलं त्रिफला द्राक्षा काश्मर्यमेव च
एभिः शृतं पयो दद्याद्द्विविधैरपि मिश्रयेत् ३७

यावशूको भवेत्क्षारः सैन्धवं साम्लवेतसम्
हिङ्गु दाडिमसारश्च पिप्पल्यो विश्वभेषजम् ३८
सर्पिषा पयसा वापि मद्येनोष्णोदकेन वा
पीतं निवर्तयेच्छूलं तीव्रं च परिकर्तिकाम् ३९
देवदारु सबिल्वं च रास्ना कर्कटकाह्वया
एरण्डोऽप्यथ पूतिश्च तैलमेभिर्विपाचयेत् ४०
तेनानुवासयेच्चैनं तदा सम्पद्यते सुखम्
गात्रस्तम्भश्च शूलश्च परिकर्तश्च शाम्यति ४१
उपद्रवाणामेतेषां शान्तिर्यदि न विद्यते
तेषां चिकित्सितं कुर्याद्यथास्वं स्वं चिकित्सितम् ४२
एवं चिकित्सितं प्रोक्तमयोगे विस्तरेण मे

अतियोगजव्यापच्चिकित्सा

अतियोगे तु वक्ष्यामि व्यापदां यच्चिकित्सितम् ४३
अतिप्रवृत्तौ वमने विरेचनमुपाचरेत्
विरेचने चातियुक्ते वमनं पाययेद् भिषक् ४४
वमने चातियुक्ते तु कार्यमास्थापनं भवेत्
उभयोरतियोगे तु स्तम्भनं हितमुच्यते ४५
उल्लिखेत्क्षौद्रयुक्तेन स नरस्तण्डुलाम्बुना
पादौ च सेचयेद्धस्तौ तथा वाप्यवगाहयेत् ४६
लामज्जकमृणालैश्च चन्दनैश्च सपद्मकैः
सन्दिह्यात्सर्वगात्राणि कषायैश्चावसेचयेत् ४७
धातकी मधुकं लोध्रं पद्मं मोचरसस्तथा
नीलोत्पलं समङ्गा च कट्फलं पद्मकेसरम् ४८
एतैर्लोहितशालीनां सिद्धां पेयां सुशीतलाम्
पिबेन्माक्षिकसंयुक्तं तदस्य स्थापनं परम् ४९

लाक्षा लोध्रस्समङ्गा च माक्षिकं कमलोत्पलम्
आजेन पयसा पीतं रक्तस्तम्भनमुच्यते ५०
रसं कपित्थपत्रस्य पाययेन्मधुसंयुतम्
पयसा बादरं द्राक्षां मधुना च पिबेन्नरः ५१
रसाश्च जाङ्गला देया व्यक्ता दाडिमसारकैः
घृतदाडिमसंयुक्ता देयाः स्युः क्षीरबस्तयः ५२
अतिप्रवृत्ते रक्ते तु रक्तमेवानुवासयेत्
शाशं मार्गमथौरभ्रं छागं माहिषमेव वा ५३
ओदनं पयसामृद्य परिपूतं समाक्षिकम्
पिबेदिक्षुरसैर्वापि परिमद्यौदनं पुनः ५४
न्युग्रोधोदुम्बरप्लक्षवेतसाश्वत्थजैस्तथा
शृङ्गैरथैषां क्षीरेण यवागूः स्थापनं परम् ५५
पद्मं शाल्मलिनिर्यासः समङ्गा धातकी तथा
जम्ब्वाम्रसारो मधुकः लाजा लाक्षा प्रियङ्गवः ५६
एतैः शृतं पयः पेयं यवागूं चापि पाययेत्
तण्डुलोदकयुक्तानि पिबेद्वा मधुना सह ५७
ओदनः कोरदूषाणां मधुना सस्यसंभृतः
पलङ्कषासमायुक्तश्चातिसारं निवर्तयेत् ५८
संयुक्तं तिलतैलेन सप्तरात्रस्थितं दधि
कोरदूषौदनोपेतमतिसारप्रणाशनम् ५९
सप्तरात्रं स्थिते तक्रे मूलकं साधयेद्भिषक्
कोरदूषौदनो योज्यः तेनातीसारनाशनः ६०
वटाङ्कुरो मोचरसो लोध्रमाम्रास्थिकन्दकः
तरुणानि च बिल्वानि धातकीकुसुमानि च ६१
पञ्चरात्रस्थिते तक्रे यूषमेभिस्तु कारयेत्

कोरदूषौदनो योज्यः तथातीसारनाशनः ६२
नीलोत्पलं नीलतिलाः समङ्गा लोध्रमेव च
क्षीरं विपाचयेदेभिरतीसारविनाशनम् ६३
तिलतैलं तथा लोध्रमाजं क्षीरं विपाचयेत्
प्रवाहिका गुदभ्रंशः सर्वमेतेन शाम्यति ६४
बला चातिबला बिल्वमेरराडश्चोरकस्तथा
एभिर्विपाचयेत्क्षीरं कफपित्तप्रणाशनम् ६५
हनुस्तम्भे च पातव्यमर्शःशूले च दारुणे
अनेनैव च कल्केन कुर्यादाच्छादितं शिरः ६६
तेन मूर्च्छा भ्रमश्चैव प्रशाम्यति शरीरिणाम्
उपद्रवाश्च येऽप्यन्ये तेषां तत्तच्चिकित्सितम् ६७
शर्करापद्मकोशीरन्यग्रोधोदुम्बरास्तथा
एभिर्विपाचयेत्क्षीरं तृष्णादाहप्रणाशनम् ६८
क्षीरबस्तिं विदद्याच्च पिच्छाबस्तिमथापि वा
अतियोगे प्रशस्यन्ते शीताश्च घृतबस्तयः ६९
जीवादानचिकित्सायां यत्पूर्वं परिकीर्तितम्
तत्कर्तव्यं गुदभ्रंशे तथा सम्पद्यते सुखम् ७०
वातशूले तु सञ्जाते सङ्करप्रस्तरादिकान्
स्वेदांश्चैवोपदेहांश्च स्वभ्यक्तानां प्रयोजयेत् ७१
वचां श्वदंष्ट्रां पूतीकां पञ्चमूलीं च साधिताम्
यदि वाऽऽस्थापनं दद्यात्सुखोष्णं चानुवासनम् ७२
क्षारैः क्षारघृतैश्चापि शूलघ्नैस्समुपाचरेत्
दाधिकं षट्पलं वापि पाययेन्मात्रया घृतम् ७३
एवमेव विबन्धेऽपि विधिं कुर्याच्चिकित्सकः
याश्च व्यापत्तयः पश्चाद्वमने च विरेचने ७४

ताश्चिकित्सेत मतिमान् यथा स्वे स्वे चिकित्सिते

विरेचनौषधस्य वमनापादने हेतुः

ग्राम्यानूपौदकं मांसं स्नेहितो योऽपि सेवते ७५
कफे प्रवृद्धे तस्याशु विरेको वमनं भवेत्
अजीर्णे चौषधं पीतमल्पं वा यदि वा बहु ७६
उत्क्लेशे चोर्ध्ववाते च दुर्युक्ते वापि भेषजे
एवं विरेचनं पीतं वमनायोपपद्यते ७७

छर्दनौषधस्य विरेकापादने हेतुः

कर्शिते रूक्षिते वापि सुकुमारे सुदारुणे
असंजातकफस्यैव न च स्निग्धस्य देहिनः ७८
छर्दनं वा स्थितं क्षुब्धं विरेकायोपपादयेत्

तत्रोपक्रमसूत्रम्

तत्रानुपानमेवाहुः केचित्केचित्त्वसाम्प्रतम् ७९
भेषजं ह्यतिमात्रं तु जीवादानाय कल्पते
ऊर्ध्वं दशाहात्परतः स्नेहस्वेदोपपादितम् ८०
पाययेत्तीक्ष्णमेवैतं भेषजं कल्पकल्पितम्
सिद्धिर्विरेचनस्यैषा वमनस्य च कीर्तिता
व्यापदश्च चिकित्सा या यथावदनुपूर्वशः ८१
इत्याह भगवानात्रेयः

इति भेले सिद्धिस्थाने चतुर्थोऽध्यायः

## पञ्चमोऽध्यायः

अथातो बस्तिमात्रीयां सिद्धिं व्याख्यास्याम इति ह स्माह भगवानात्रेयः

बस्त्यर्हाणां विषये मतभेदाः

संसृष्टभक्ते शंसन्ति बस्तिकर्म चिकित्सकाः
विरिक्तेष्वपरे वैद्या निरूढेत्वपरे जनाः १

अत्रार्थे भेलाचार्याणामाशयः

त्रीण्येतान्यवराण्याहुः न शंसन्ति विशारदाः
मतं तेषामहं सम्यग्व्याहनिष्यामि हेतुभिः २
सततन्तु विरिक्तस्य शीतीभवति पावकः
हृदाश्रयाणि स्रोतांसि गुदकोष्ठाश्रयाणि च ३
प्रवृद्धो मारुतस्तस्य पक्वाधानं प्रधावति
शीतीकरोति कायाग्निं बलं चास्यापकर्षति ४
स्रोतस्सु शुद्धाशुद्धेषु यदि बस्तिः प्रदीयते
स गम्भीरो गतः काये सर्वशो न निवर्तते ५
छर्दिं पिपासां हृद्रोगं पाण्डुत्वं श्वयथुं तथा
जनयेदिह तस्माद्धि विरिक्तं नानुवासयेत् ६
संसृष्टभक्तस्य पुनः जातदोषस्य देहिनः
स्रोतस्सु मललिप्तेषु भवेत्स्नेहो निरर्थकः ७
तीक्ष्णेतरनिरूहेण निरूढस्य शरीरिणः
समुत्क्लिष्टेषु दोषेषु स्नेहबस्तिर्न शस्यते ८

अनुवासनप्रयोगे केषांचिन्मतम्

केचिच्चापि शरीरस्य रात्रिर्पयुषितस्य च
प्रशान्ता दोषसंज्ञानः प्रशंसन्त्यनुवासनम् ९

बस्तिकर्मविधानम्

बस्तिकर्मविधानं तु शृणु मे निरुपद्रवम्
स्नेहितस्य यथान्यायं विरिक्तस्य च कल्पशः १०

संसृष्टभक्तस्य तथा पुनश्च स्नेहितस्य च
पञ्चरात्रात्परं तस्य कारयेदनुवासनम्  ११
नोपर्यस्निग्धकोष्ठस्य कर्तव्यमनुवासनम्
वातो ह्यूरीकृतस्तस्य हृदये परितिष्ठति  १२
उचिताद्भक्तमानादप्यर्धमात्रं तु भोजयेत्
तनुना मुद्गयूषेण जाङ्गलेन रसेन वा  १३
भुक्त्वा कृतसमाश्वासः शकृन्मूत्रे विसृज्य च
सव्येन पार्श्वेन नरः संविशेच्छयने समे  १४
संकोचयेद्दक्षिणं च सक्थिं वामं प्रसारयेत्
वामोपधानं कुर्वीत शिरस्युपहितं नरः  १५
अथास्य प्रणयेद्बस्ति पृष्ठवंशानुगं सुखम्
यथाकर्मबलं चैव न द्रुतं न विलम्बितम्  १६
निर्व्यलीको मृदुबस्तिर्व्यपनीतानिलस्तथा
गाढानिलानुबन्धेऽस्याप्रशस्तो बस्तिकर्मणि  १७
नेत्रं बस्तिमुखे धृत्वा सम्यगेकेन पाणिना
प्रपीडयेच्चापरेण हस्तौ चापि न कम्पयेत्  १८
पूर्वं च गुदमभ्यज्य यन्त्रं हस्तौ च मानवः
प्रवर्तयेदथोत्तानं पादौ वास्य प्रसारयेत्  १९
मुहूर्तान्न निगृह्णीयाद्दत्ते बस्तौ यथासुखम्
ततः परमतो वेगानागतान्न विधारयेत्  २०

अनुवासनसिद्धिलक्षणम्

अविबन्धस्सवातश्च सपुरीषस्स सिध्यति

बस्तिप्रयोगे नियमः  आवस्थिकोपचाराश्च

दत्तमात्रे पुनर्यस्य तैलबस्तिर्निवर्तते  २१

न स कार्यकरः प्रोक्तस्तस्यान्यं प्रणिधापयेत्
तृषितस्स तथा रात्रिं काल्यमुष्णोदकं पिबेत् २२
एकान्तरे च दातव्यो बस्तिर्न सततं नृणाम्
अभ्यङ्गोन्मर्दनं चैव कोष्णतोयावसेचनम् २३
उष्णोदकानुपानं च बस्तिकर्मणि शस्यते

अनुवासितस्य निरूहविधिः

चतुर्षु त्रिषु वा वैद्यो यावद्वा स्निग्धता पुनः २४
स्नेहबस्तिषु दत्तेषु कुर्यादास्थापनं ततः
आर्द्रीकृतेषु स्रोतस्सु स्नेहेन विहितेन च २५
शुद्धये स्रोतसां दद्यान्निरूहान्युक्तितः सुखम्
अशुद्धे मलिने कोष्ठे स्नेहबस्तिः प्रयोजितः २६
प्रदर्शयति वैशिष्यं शुक्ले पर्वव्ययीकृतम्

बस्तौ विरेचनोपचारातिदेशः

विरेचनोपचारश्च कर्तव्यो बस्तिकर्मणि

यवागूप्रतिषेधः

यवागूप्रतिपानं च बस्तिकर्मणि वर्जयेत्

कर्मबस्तयः

चतुर्विंशतिसङ्ख्याताः निरूहास्सानुवासनाः २८
एतत्कर्मेति निर्दिष्टमूर्ध्ववाते प्रदापयेत्

रोगानुगुणबस्तिविधिः

मृदुमध्यमतीक्ष्णेषु रोगेषु कुशलो भिषक् २९
मृदुमध्यमतीक्ष्णं च बस्तिकर्म च कारयेत्

बस्तौ वर्ज्यानि

ग्राम्यानूपौदकं मांसं पिष्टान्नं पललं दधि ३०
अम्लशाकविकारांश्च भक्ष्याणि विविधानि च
शीतोदकस्य पानं च तथा शीतावगाहनम् ३१
गुरूणि चान्नपानानि बस्तिकर्मणि वर्जयेत्

बस्तौ सेव्यानि

शालिषष्टिकमुद्गांश्च भोजनार्थं प्रदापयेत् ३२
व्यञ्जनार्थं प्रदेयाः स्युः शशतित्तिरिलावुकाः

बस्तिप्रशस्तिः

ज्ञानवान्सुमिताहारो वैद्यशूश्रूषुरेव च
यश्च बस्तिमुपासीत स जीवेच्छरदां शतम् ३३
इत्याह भगवानात्रेयः

इति भेले सिद्धिस्थाने पञ्चमोऽध्यायः

षष्ठोऽध्यायः

अथात उपकल्पसिद्धिं व्याख्यास्याम इति ह स्माह भगवानात्रेयः

बास्त्युपकल्पादि निरूपण प्रतिज्ञा

उपकल्पमतो बस्तेर्नेत्रं स्नेहं च सर्वशः
तेषां प्रयोगयुक्तिं च क्रियां कर्म च मे शृणु १
बालानामथ वृद्धानां युवमध्यमवयोस्तथा
स्वस्थानामातुराणां च बस्तिकर्म प्रशस्यते २

बस्तेस्सर्वार्हत्वम्

बस्तिनेत्रम्

सौवर्णं राजतं ताम्रं कांस्यं त्रपुजमायसम्

शृङ्गवंशास्थिवंशाग्राण्याहुर्नेत्राणि पण्डिताः ३
यथाक्रममथैतानि प्रधानानीतराणि च
उत्तमाधममध्येषु मनुष्येषु प्रयोजयेत् ४
गुलीकास्यं तु नेत्रं स्यादनूनद्वादशाङ्गुलम्
अङ्गुले कर्णिकावासः तां च न क्रमयेद्गुदे ५
तत्र गोपुच्छसंस्थानं सुश्लक्ष्णं सुखकर्णिकम्
प्रदेशिनीपरीणाहं दानं तेन प्रशस्यते ६

बस्तिनिवृत्तिकालः

तत्र मात्राशतं स्थित्वा स्वेनैव विनिवर्तते

नवस्नेहादिकृता दोषाः

यद्यकाले नवस्नेहो मद्यमांसप्रकल्पितः ७
न्यूनकालनिवृत्तश्च शीघ्रत्वान्न निरूहति

मध्यमः निवृत्तिकालः

ततस्तु मध्यमः किञ्चिन्निवर्तेत शतैस्त्रिभिः ८

अनिवृत्तौ तीक्ष्णेन प्रत्यानयनम्

एवं कालगतिक्रान्तो यो बस्तिर्न निवर्तते
तीक्ष्णेनास्थापनेनैवं क्षिप्रं प्रतिनिवर्तते ९
तस्मात्तीक्ष्णतरं बस्तिं पूर्वमेवोपकल्पयेत्
प्राणसंधारणे ह्यच्चैर्विबन्धो न प्रशस्यते १०

कालादिज्ञानस्यावश्यकता

तस्मात्कालं च यो व्याधिं निरूहाणां बलाबलम्
पूर्णरूपं च यो वेत्ति स मोहं न निगच्छति ११

दुर्युक्तबस्तिगर्हणम्

न तथा ह्यन्तयो हन्यान्नाशनिर्न हुताशनः
दुष्प्रयुक्तो यथा बस्तिः प्राणैस्सद्यो वियोजयेत्  १२

निवृत्तानिवृत्तयोः शुभाशुभत्वम्

शस्तः प्राणिहितो बस्तिस्सद्यो रोगहरस्तथा
सम्यङ् निवृत्तो रोगौघैर्ह्यनिवृत्तस्तु प्राणहा  १३
स निवृत्तस्तु वेगेन दोषान् गम्भीरमास्थितान्
उन्मार्गस्थान्नयेन्मार्गं मार्गस्थांश्चानुलोमयेत्  १४

चिकित्सार्धं कृत्स्ना चिकित्सा वा बस्तिः

बस्तिवेगोऽनिलं हन्ति पर्जन्यं च यथानिलः
कफपित्तविकाराहि सर्वे वातवशानुगाः  १५
अशीतिर्वातिका रोगाश्चत्वारिंशत्तु पित्तजाः
विंशतिः श्लैष्मिकाश्चापि संसृष्टानामसंग्रहात्  १६
सर्वेषामेव चैतेषां रोगाणां संग्रहैस्सदा
अर्दितानां हि भूतानां बस्तिरग्र्यं परायणम्  १७
अनिलप्रभवा ह्येते सर्वे बस्तिवशानुगाः
तस्मादर्धं चिकित्सायाः सर्वं वा बस्तिरुच्यते  १८

चतुर्मासं बस्तिसेवायां सर्वरोगाभावः

यस्तु बस्तिं निषेवेत चातुर्मास्यं सदा नरः
रोगास्संवर्जयेयुस्तं सिंहावासं यथा गजाः  १९
एते गुणविशेषाश्च व्याख्याता बस्तिकर्मणि

निरूहप्रशंसा

निरूहस्यास्य सामर्थ्यमुपचारं च मे शृणु  २०
स्विन्ने पर्युषिते जीर्णे त्वत्यन्तं च निरूहयेत्
सोऽस्य मूत्रं पुरीषं च श्लेष्माणं चापकर्षति  २१

वातानुलोम्यं कुरुते बलं सञ्जनयत्यपि
विषस्थिरं दोषबलं यच्च नाडीषु संस्थितम्  २२
विशोधयति तत्सर्वं निरूहः स प्रयोजितः
रोगानीकस्य सर्वस्य परो नास्ति ह तत्समः  २३
व्याकुलानां च केशानां सीमान्तकरणं यथा
तथा भृशं व्याकुलानां दोषाणां स्यान्निरूहतः  २४
निरूहो हि समायुक्तस्सम्यग्वीर्यस्समैर्गुणैः
व्याधीनथोद्धरेत्क्षिप्रं पुण्यं युक्तं नरं यथा  २५

निरूहार्हाः

कृच्छ्रमूत्रपुरीषाणां शूलिनां वातगुल्मिनाम्
विरेचनाद्युदावर्ते हृद्रोगे पार्श्वशूलिनि  २६
उदरेषु प्रमेहेषु कुष्ठेषु कृमिकोष्ठिषु
श्लेष्मणा सह संसृष्टे शोणितेन च दूषिते  २७
संसृष्टेषु च सर्वेषु सन्निपातोद्भवेषु च
गम्भीरा धातुगा ये च तेषां श्रेष्ठं निरूहणम्  २८

निरूहसिद्धिलक्षणम्

यदा कफं विरिच्येत शङ्खस्फटिकसन्निभम्
ऋते मूत्रपुरीषाभ्यां तन्निरूहस्य लक्षणम्  २९

निरूढस्यानुवासः

सुशोधितं निरूहेण नातिपर्युषितं तथा
सुखोषितं समाश्वस्तं भोजितं चानुवासयेत्  ३०

बस्तेरमृतकल्पत्वम्

एकतो बस्तिकर्माणि ह्येकतोऽन्यच्चिकित्सितम्
अमृतार्थं बस्तिकर्म कुरुते सुप्रयोजितम्  ३१

बस्तेर्वृष्यत्वादि

शुक्लं बह्ववरोधस्य न क्षयं याति देहिनः
स्त्रीषु प्रधर्षणं कुर्यान्नराणां क्षीणरेतसाम्  ३२
हन्याद्वातरजः स्त्रीणां वन्ध्या गर्भं लभेत च
बस्तिप्रयोगात् षण्डोऽपि पुमान् भवति सर्वशः
कृशानामपि मर्त्यानां मांससंजननं स्मृतम्  ३३
इत्याह भगवानात्रेयः

इति भेले सिद्धिस्थाने षष्ठोऽध्यायः

सप्तमोऽध्यायः

अथातः फलमात्रासिद्धिं व्याख्यास्याम इति ह स्माह भगवानात्रेयः

बस्तौ मदनस्य श्रैष्ठ्यम्

फलमात्रं निरूहेषु श्रेष्ठमाहुर्मनीषिणः
तेषां तु मदनं श्रेष्ठं प्रवदन्ति चिकित्सकाः  १

बस्त्यर्हफलविषये मतानि भेलाचार्याशयश्च

जीमूतकं प्रशंसन्ति केचिद्धामार्गवं तथा
कृतवेधनमित्येके कुटजं प्राहुरप्यथ  २
गर्हितास्सर्व एवैते वादाः प्रत्येकशः स्मृताः
भेषजानां च सङ्घातो निरूहेषु प्रशस्यते  ३

दोषानुगुणनिरूहनिरूपणप्रतिज्ञा

वातपित्तकफघ्नांस्तु निरूहांश्चानुपूर्वशः
व्याख्यास्यामो यथान्यायं सन्निपातहिताश्च ये  ४

वातघ्नो निरूहः

द्वे पञ्चमूल्यौ कोलानि नलदश्शुष्कमूलकम्

द्विपलीनानि सर्वाणि जलद्रोणे विपाचयेत् ५
अष्टभागावशेषं तु कषायमवतारयेत्
कल्कपेष्याणि चेमानि भेषजानि समावपेत् ६
निकुञ्चिकां खरपुष्पां पिप्पलीं सैन्धवं वचाम्
त्रपुसोर्वारुबीजानि शतपुष्पां यवानिकाम् ७
कुष्ठं च तगरं चैव यष्टीमधुकमेव च
सक्षीरस्सकषायश्च सगोमूत्रश्च कीर्तितः ८
सतैलश्च निरूहः स्याद्वातरोगविनाशनः

पित्तहरः निरूहः

पटोलपत्रमूलं च पिचुमन्दं शतावरीम् ९
त्रायमाणां बलां रास्नां बृहतीं कण्टकारिकाम्
गूडूचीं त्रिफलां श्यामां सारिवां वंशकत्वचम् १०
द्विपलीनान् पृथग्भागान्पूर्वकल्पेन साधयेत्
मधुकं वंशकफलं शतपुष्पां दुरालभाम् ११
महासहामंशुमतीं कल्कं कुर्यात्पृथक् पृथक्
क्षीरेणाथ कषायेण घृतेन मधुना तथा १२
कल्पमिश्रः सुमथितो निरूहः पित्तनाशनः

श्लेष्मघ्ननिरूहः

दशमूली करञ्जौ द्वौ दन्ती चित्रकमेव च १३
एकाष्ठीला तुरङ्गी च त्रिफला देवदारु च
पूतिकं रौहिषं श्यामा मूर्वा राजतृणानि च १४
पृथक् पञ्चपलानेतान् साधयेत्सर्वकल्पवित्
अधोभागोर्ध्वभाग्द्रव्यैस्साधयेत्साधु योजितैः १५
मूत्रतैलयुतः श्रेष्ठः निरूहः श्लेष्मनाशनः

अश्वगन्धादिनिरूहः

अश्वगन्धां बलां रास्नां श्वदंष्ट्रां सपुनर्नवाम्  १६
पटोलपञ्चमूल्यौ च भार्ङ्गीं श्यामां शतावरीम्
गूडूचीं त्रिफलां शिग्रुं कर्णिकायाः फलानि च  १७
उशीरं रजनीपत्रं पूतिकं कत्तृणानि च
पृथक् पञ्चपलानेतान् खण्डशश्छेदयेत् भिषक्  १८
जलद्रोणे विपक्तव्यमष्टभागावशेषितम्
मधुकं शतपुष्पां च सैन्धवं सर्षपान् गुडम्  १९
हपुषामजमोदां च मदनस्य फलानि च
वचामशोकबीजानि पिप्पलीकुष्ठमेव च  २०
एतानि कल्कपेष्याणि भेषजानि पृथक् पृथक्
क्षीरतैलसमायुक्तो घृतमूत्रसमन्वितः  २१
खजेन मथितः पूतःस निरूहः प्रशस्यते

पृथग्दोषसंसर्गसन्निपातेषु युक्त्या कल्पनविधिः

एकेन यदि वा द्वाभ्यां त्रिभिर्वातिप्रमाणतः  २२
किंचिन्नयूनातिरिक्तं वा ज्ञात्वा व्याधिबलाबलम्

विषयभेदेन बस्तिद्रव्यमात्रा

विंशतिवर्षाणां तत्र प्रस्थप्रमाणतः  २३
अथ द्वादशवर्षाणामर्धप्रस्थं प्रयोजयेत्
कषायकुडवं चात्र षड्वर्षाणां प्रयोजयेत्  २४
युक्तं लवणतैलाभ्यां क्षीरेण मधुना तथा
कषायबस्तिं कुर्वीत स्नेहाद् द्विप्रसृतं भिषक्  २५
प्रसृतं मध्यमे कुर्यात्प्रसृतार्धं कनीयसि

अतिशीतादिबस्तिप्रयोगे दोषाः

नातिशीतं न वात्युष्णं कषायमुपकल्पयेत्  २६
वायुः कुप्यति शीतत्वादत्युष्णं तु गुदं दहेत्
अतिसान्द्रातिग्रथितो दोषेण स हि मूर्छति  २७
मदप्रवेगो भवति व्यापच्चास्योपजायते
अथवापि तनुर्यस्य कषायो योजितो भवेत्  २८
सोऽल्पं हरति दोषं च न च संशोधयेद् गुदम्
परिकर्तं च शूलं च जनयेच्च प्रवाहिकाम्  २९
अन्त्यर्थमधुरो दत्तो विदग्धस्तम्भवेदनाम्
ग्रहणीं रक्तमर्शांसि पाण्डुरोगं भगन्दरम्  ३०
अतितीक्ष्णस्तु दुर्युक्तः क्षिप्रं प्रतिनिवर्तते
न निर्हरति दोषाश्च ज्वरं मूर्छां करोति च  ३१

निरूहे अवस्थानुसारेण विशेषः

ज्वरितं दह्यमानं च मूर्छमानं च मानवम्
शीतैर्मधुरसंयुक्तैर्योजयेत्क्षीरबस्तिभिः  ३२
यस्याथ लवणः कोष्ठे निरूहः पैत्तिकीं रुजाम्
जनयेत्तत्र पेष्यं स्यान्मधुरेण निरूहणम्  ३३
निरूहो मधुरो यस्य श्लेष्माणं परिकोपयेत्
कटुकैश्च कषायैस्तं निरूहेद्यस्य मारुतः  ३४
प्रकुप्येदधिकं तत्र मारुतघ्नं निरूहणम्
तस्माल्लवणयुक्तानि द्रव्याणि मधुराणि च  ३५
भिषग्दद्यान्न शीतानि तथोष्णानि विवेचयेत्

शीतोष्णनिरूहविषयाः

पित्ते शीतो निरूहः स्यादुष्णस्तु कफवातयोः  ३६
प्रश्लेष्मणि प्रवाते वाप्युष्णमास्थापनं भवेत्

निरूहे फलतैलादिविधिः

मदनस्य फलं पिष्ट्वा तैलेनाच्छेन साधयेत्  ३७
तन्निरूहे प्रशंसन्ति फलतैलं चिकित्सकः
गोमूत्रयुक्तमेतत्तु फलतैलनिरूहणम्  ३८
निरूहं लवणं कुर्याच्छ्रेष्ठमानाहभेदनम्
बिल्वैरण्डफलं वापि पचेद् द्विप्रस्थसम्मितम्  ३९
अम्लं सलवणं साध्यमष्टभागावशेषितम्
कषाये तत्र पीलूनि कल्कपेष्याणि योजयेत्  ४०
फलतैलयुतो बस्तिर्देयं आनाहभेदनः
एष सर्वानुदावर्तान् शोफगुल्मान् भिनत्त्यपि  ४१
अथैव बस्तिराध्मानमुदावर्तं विनाशयेत्

पिच्छाबस्तियोगौ

ओष्ठजिह्वं पृष्ठच्चूर्णं बृहतीं कण्टकारिकाम्  ४२
चन्दनं पद्मकं चैव वृन्तं पुष्पं च शाल्मलेः
खण्डितानां यवानान्तु कुडवं तत्र योजयेत्  ४३
तदैकध्यं पचेत्सर्वं जले चाष्टगुणे भिषक्
घृतेन मधुना चैव पिच्छां संयोज्य शक्तितः  ४४
निर्वाहिकायां शंसन्ति पिच्छाबस्तिमिमं बुधाः
अतस्तु षोडशी चैव पले द्वे च पुनर्नवे  ४५
कटाहके पञ्चमूलीं यवैः सह विपाचयेत्
उपोदकायाः क्षुण्णायाः स्वरसं च सुपीडितम्  ४६
युक्तं तेन कषायेण घृतेन सह योजयेत्
माक्षिकेण च संयुक्तो बस्तिस्तु यवमूर्च्छितः  ४७
पिच्छाबस्तिरिति ख्यातः शूले निर्वाहिकासु च

क्षतक्षीणे निर्वाहिकादौ बस्तिः

तरुणं शिंशुपापत्रं कुर्बुदारस्य पल्लवम् ४८
क्षुरणैस्सह यवैस्सिद्धैः संपिष्टो घृतसंयुतः
माक्षिकक्षीरसंयुक्तः स बस्तिर्यवमूर्च्छितः ४९
निर्वाहिकां वातशूलं क्षतक्षीणस्य नाशयेत्

अध्यायार्थोपसंहारः

एते निरूहा व्याख्याताः सर्वरोगविनाशनाः
व्याकुलेषु विकारैस्तु तान् भिषक् संप्रयोजयेत् ५०
इत्याह भगवानात्रेयः

इति भेले सप्तमोऽध्यायः

अष्टमोऽध्यायः

अथातो दशव्यापदामास्थापनानुवासनसिद्धिं व्याख्यास्याम इति ह स्माह भगवानात्रेयः

बस्तिव्यापदः तच्चिकित्सा च

स्नेहबस्तिर्निरूहश्च द्विविधं याति विभ्रमम्
न युज्यते वा दुर्युक्तो युक्तो वाप्यतिपूर्यते १
तेषां विप्रतिपन्नानां बस्तीनां व्यापदो दश
तासां रूपं चिकित्सां च प्रवक्ष्याम्यनुपूर्वशः २
न माति वा गुदे युक्तो वातादिगदपीडिते
पुरीषेणावृते वापि स न गाढं प्रपीडितः ३
अर्शसा प्रतिसंरुद्धः श्लेष्मणा पिहिते गुदे
गुरुयन्त्रयुतो वापि नेत्रे वा जीर्णसर्पिते ४
न गच्छति गुदे बस्तिर्विभ्रान्तेषु च धातुषु

तमयोगमिति ब्रूयादतियोगं निबोध मे ५
वाताभिभूतपित्ते वा श्लेष्मणा वाहिताशिनः
पुरीषेणाभिभूतश्च दूरं चातिप्रपीडितः ६
न प्रत्यायात्यधो बस्तिर्भीतस्योन्मथितस्य वा
गुदवल्यां तृतीयायामर्शोभिर्वा निवारितः ७
विरेचितस्य वान्तस्य मद्यशोकाकुलस्य च
न प्रत्यायात्यधो बस्तिरूर्ध्वं वातिप्रवर्तते ८
तेषामुपद्रवा घोरा जायन्ते बस्तिविभ्रमात्
जीवादानं तृषाच्छर्दिः हृद्रोगः श्वयथुस्तथा ९
शूलमर्शासि पाण्डुत्वं श्वासोऽथ परिकर्तिका
एषां प्रत्येकशो रूपं चिकित्सां च निबोध मे १०
गुरुकोष्ठस्य रूक्षस्य बहुदोषस्य देहिनः
अस्निग्धस्य गुरुव्याधेर्यदि बस्तिः प्रदीयते ११
अत्यल्पो वाथ रूक्षो वा शीतवीर्यौषधस्तथा
लवणस्नेहरिक्तो वा तनुस्सान्द्रोऽथ वा भृशम् १२
सम्बद्धबहुदोषस्य दोषानुत्क्लेशयत्यपि
तत्रस्था यत्र सर्पन्ति दोषास्ते पीडिता भृशम् १३
कटावस्थ्यूरुजङ्घे च पादपृष्ठोदरे तथा
प्रस्यन्दन्ते भवेच्चास्य सशूलमुदकोदरम् १४
बस्तिशूलमुदावर्तो गुदशोषो ज्वरस्तथा
निष्ठीवकासहृल्लासा भक्तद्वेषो विवर्णता १५
स्निग्धस्य तस्य स्विन्नस्य संकरप्रस्तरादिभिः
निरूहं कारयेत्तीक्ष्णममोघाप्रतिवारणम् १६

बिल्वादिनिरूहः

बिल्वाग्निमन्थस्योनाककाश्मर्याश्च सपाटलाः

रास्ना बलागोक्षुरकयवकोलकुलुत्थकाः १७
एतत्सर्वं समाहृत्य जलद्रोणे विपाचयेत्
चतुर्भागावशिष्टं तं कषायमवतारयेत् १८
कल्केन सर्षपाणां च पीलूनां मदनस्य च
सयवासकषायं तु तत्तैललवणेन च १९
मूत्राणि च यथालाभमथ सम्यङ्‌ निरूपयेत्
यथा तूतिबला ---- २०
तत्र वादित्रशब्दांश्च श्रेयसश्च स्वनानपि
शान्ति पुण्याहघोषांश्च कुर्याच्चापि प्रदक्षिणम् २१
तं निधाय शुभे कुम्भे बस्तिं दद्यात्प्रमाणतः
देवप्रसादतो बस्तिरर्दितानां महागुणः २२
सर्वरोगहरो वृष्यः क्षतक्षीणरुजापहः
वातपित्तसमुत्थाना रोगा ये परिकीर्तिताः २३
कामदाहज्वराद्यांस्तान्नाशयेदविशङ्कितः
त्रिभागमाक्षिको ह्येष वलीपलितनाशनः २४
रूपवर्णकरः पुंसां बलमांसविवर्धनः

शतावर्यादिरसायनबस्तिः

शतावरीं सहचरं रास्नां गोक्षुरकं बलाम् २५
शतं शतं कल्पयित्वा तोयद्रोणशते पचेत्
द्रोणावशेषितं तच्च परिपूतं निधापयेत् २६
बर्हिकुक्कुटहंसानां मांसान्यपि पृथक्पृथक्
वसा माहिषवाराहमेषाणां प्रस्थसम्मितम् २७
विदार्यामलकेक्षूणां रसप्रस्थाः पृथक् पृथक्
तत्र तैलघृतप्रस्थौ क्षीरमष्टगुणं भवेत् २८

तद्गोमयाग्निना युक्त्या कल्केनानेन साधयेत्
तुगाक्षीर्यामलक्यौ च द्राक्षामधुकचन्दनैः २९
मधूलिकापटोलाभ्यां पत्रं नीलोत्पलस्य च
विशालां च मृणालं च कपिकच्छुफलानि च ३०
खर्जूरौदनपाक्यौ च शीतपाकीं निदिग्धिकाम्
सलामञ्जत्वचं पत्रं ह्रीबेरं समहासहम् ३१
जीवकर्षभकौ मेदां पिप्पलीश्चापि संहरेत्
तत्सिद्धं शीतलीकृत्य क्षौद्रप्रस्थे नियोजयेत् ३२
तत्र वादित्रशब्दांश्च कुर्यात्स्वस्त्ययनानि च
गजस्कन्धं समारोप्य श्वेतच्छत्रानुपालितम् ३३
चेलावृतं च कुर्वीत साधुशब्दांश्च सर्वशः
ततोऽस्मिन् दापयेद्बस्तिं पुण्येऽहनि रसायनम् ३४
बस्तिनानेन दत्तेन गच्छेन्नारीशतं नरः
न वात्र यन्त्रणा काचिदुक्ता नारीविहारगा ३५
वृष्यो बलकरो बस्तिराप्त आयुर्विवर्धनः
वलीपलितखालित्यं सेवमानो नियच्छति ३६
षण्डांश्च पुरुषान् कुर्याल्लक्षणाढ्यान् गुणान्वितान्
क्षीणान् क्षतान्नष्टशुक्लान् विषमज्वरपीडितान् ३७
योनीनां व्यापदौ वन्ध्यां बस्तिरेष नियच्छति

रासायनिकबस्तिः

गुडूचीस्वरसप्रस्थं ग्राहयेद्यन्त्रपीडितम् ३८
शतावरीरसप्रस्थं तद्वत्सहचरस्य च
विदार्यामलकेक्षूणां द्राक्षाखर्जूरयोरपि ३९
पृथक् कुर्याद्रसप्रस्थं प्रस्थौ द्वौ तैलसर्पिषोः
आजमाहिषगव्यानि क्षीराणि द्विगुणानि च ४०

ज्ञुराणपिष्टानि चेमानि पेषयित्वा विपाचयेत्
वधूटिकामुञ्चटां च मधुकं पिप्पलीमपि ४१
शृङ्गाटकं पुष्करिकां काराडं नीलोत्पलस्य च
जीवकर्षभकौ मेदां बलां नीलोत्पलानि च ४२
तुगाक्षीरीं महामेदां पुराडरीकस्य केसरम्
वृषमेषचकोराणां हंसकुक्कुटयोरिह ४३
जीवञ्जीवकमत्ताक्षकुररीक्रौञ्चबर्हिणाम्
वसा मज्जा च सत्त्वानां मेषमांसरसैस्सह ४४
विभागं माक्षिकं चैव युञ्ज्यात्सम्यग्विपाचिते
शङ्खभेरीनिनादैश्च पटहैर्वा मुरीस्वनैः ४५
आरोपयेद्गजस्कन्धे श्वेतच्छत्रध्वजायुतम्
सिद्धानां परमं देवं महर्षिगणसेवितम् ४६
शरणं सर्वभूतानामर्चयेद् वृषभध्वजम्
आशीभिर्मङ्गलाशंसिस्तुतिभिर्देवतार्चनैः ४७
रसायनानि सिध्यन्तिविपरीतानि चान्यथा
तं स्नेहं गमयेद्बस्तिं रासायनिकमुत्तमम् ४८
अथाहारविहारेषु च चैनं यन्त्रयेद्भिषक्
व्यापन्नयोनयो वन्ध्या रक्तगुल्मिन्य एव च ४९
या वाऽपत्यं मृतं सूते याश्च नष्टार्तवास्तथा
नष्टशुक्लक्षतक्षीणा विषमज्वरपीडिताः ५०
प्रक्षीणमांसरुधिरा वलीपलितपीडिताः
आशु प्रशमयेद्रोगान् तानायुर्मांसवर्धनम् ५१
रसायनमिदं श्रेष्ठं नराणाममृतोपमम्
रसायनविधानानि प्रोक्तान्येतानि यानि च ५२
सहस्रशतपाकानि कार्याणि विभवे सति

मधुकादिबस्तिः

मधुकं सैन्धवं कुष्ठं शतपुष्पा हरेणवः ५३
मदनानि च रास्ना च भार्ङ्गी नीपरकज्वलम्
मरि ----- ५४

मायूराद्यनिरुहाः

मायूरं कौक्कुटं वापि वेशवारं सुकुट्टितम्
सहितं दशमूल्यां तु जलद्रोणे विपाचयेत् ५५
रसस्य तस्य पूतस्य प्रस्थार्ध च प्रदापयेत्
वसातैलघृतानां तु मधुनः प्रसृतद्वयम् ५६
हपुषाशतपुष्पाणां मुस्तानां चापि कार्षिकम्
कल्कपेष्यं पुनर्दद्याद्बस्तिं सलवणं सुखम् ५७
पादगुल्फोरुजङ्घासु त्रिकवङ्क्षणबस्तिषु
शिश्ने वृषणयोश्चैव वातरोगं नियच्छति ५८
मृगाणां तित्तिराणां च तथैव बिलवासिनाम्
आनूपानां खगानां च कल्पमेवं प्रयोजयेत् ५९
तुल्यं मधु च तैलं च तस्मादुष्णोदकं समम्
द्वौ कर्षौ शतपुष्पाणां कर्षश्च लवणोत्तमः ६०
एष रासायनो बस्तिर्दीपनीयोऽथ बृंहणः
बलवर्णकरो वृष्यो यापनो निरुपद्रवः ६१
गुल्मोदावर्तिताध्मानप्रमेहकृमिकोष्ठिनाम्
नित्यं गाढपुरीषाणां बस्तिरेष हितः स्मृतः ६२
घृतं मधु च तैलं च तेषां मानं समं भवेत्
पूर्वकल्केन देयानि स बस्तिर्बलवर्णकृत् ६३
बस्तौ मेढ्रगते दोषे बस्त्यसात्म्यचिकित्सिते

पैत्तिके मूत्रकृच्छ्रे च पित्तव्याधिषु चोत्तमः ६४
तुल्यं घृतमथ क्षौद्रं तयोर्मांसरसस्समः
अक्षमात्रं च मुस्तानां स बस्तिः पूर्वकल्पवत् ६५
गुल्फोरुजानुपृष्ठेषु सर्वतः स्तम्भितेषु च
बलासपादहर्षेषु बस्तिः प्रशमनः स्मृतः ६६
बस्तौ वृषणमेढ्रेषु शूलमाशु नियच्छति
त्रिकजानूरुपृष्ठादिवेदनां चापकर्षति ६७

बस्त्यनिवृत्तौ निवर्तनविधिः

मृदुत्वान्न निवर्तन्ते क्षुभ्यन्ते बस्तयश्च वा
तीक्ष्णैरास्थापनं कार्यं क्षिप्रं प्रतिनिवर्तयेत् ६८

मृदुयापनबस्तिजव्यापत् प्रतिक्रिया च

मृदुत्वाद्यापनानां तु केचिद्विभ्रमभीरवः
दीपनानां कषायेण योजयन्ति चिकित्सकाः ६९
एवमन्येषु विभ्रान्तौ सनिरूहेषु वा पुनः

बस्तिसम्यग्योगप्रशंसा

बस्तयः कल्पदृष्टा हि यथा काले सुखावहाः ७०
क्षीणातिरिक्ता दूष्यन्ते तस्माद्योगं समाहरेत्
नित्यं नारीविहारामां क्षीणानामल्परेतसाम् ७२
एवमेव विधानं च रेतोबलविवर्धनम्

वाजीकरा बस्तयः

स्वेच्छाविहारान् वक्ष्यामि बस्तीन् शुक्लविवर्धनान् ७२
रसः कर्कटकानां तु शर्करामस्तुसंयुतः
घृतसौबर्चलयुतो बस्तिर्वृष्यतमः स्मृतः ७३
हंससारसलावानां तित्तिरिक्रौञ्चबर्हिणाम्

कल्पेनानेन कर्तव्या वाजीकरणबस्तयः ७४
पयः कुक्कुटमांसेन विपक्वं मधुसंयुतम्
चटकाण्डरसश्चैव कुक्कुटाण्डरसस्तथा ७५
घृतमाक्षिकसंयुक्तः शर्करासैन्धवैर्युतः
एष बस्तिः स्मृतो वृष्यः मांसशुक्लविवर्धनः ७६
एतश्शतं वा षष्टिं वा नारीर्गच्छति मानवः
एष वर्णबलोत्साहः स्थविरेऽपि प्रदृश्यते ७७
तिमिङ्गिले वा मकरे पाठीने नक्रमीनयोः
दुग्धं कूर्मेऽथकुम्भीरे कल्पयेच्छिशुमारवत् ७८

क्रीडाबस्तिः

वाराहवस्तवृषणौ वृषणौ गोवृषस्य च
चटकर्कटकांश्चैव क्षीरेण सह साधयेत् ७९
तन्निरूहं तु शुक्रेण बस्तानामथ मिश्रयेत्
उच्चटेक्षुरकं चात्र कल्कपेष्यं समावपेत् ८०
घृतमाक्षिकसंयुक्तं प्रणीतः शर्करायुतः
किञ्चिल्लवणितो बस्तिर्गमयेत्स्त्रीशतान्यपि ८१
एष नारीविहाराणां बह्वन्तःपुरवासिनाम्
रेतोबलकरः श्रेष्ठः क्रीडाबस्तिरनुत्तमः ८२
आत्मगुप्ताफलैः क्षीरमुच्चटेक्षुरकैः शृतम्
भोजने वानुपाने वा वृष्यार्थं सम्प्रयोजयेत् ८३

रसायनबस्तिष्वतिदेशः

रसायना बस्तयस्तु ये मया पूर्वदर्शिताः
तानेतैर्मांसनिर्यूहैर्योजयेत्कल्पकल्पितान् ८४
बभ्रूसूकरखड्गाश्च छागगोमहिषास्तथा

क्रौञ्चकारण्डवाः क्रौञ्चचक्रवाकबकास्तथा ८५
निरूहमेषां संहृत्य लाभतस्साधु योजयेत्

पनसबीजादिबस्तिः

क्षीरं पनसबीजानि कपिकच्छूफलानि च ८६
उच्चटेक्षुरबीजानि मधुकं तालमस्तकम्
पिप्पल्यश्शारिवा द्राक्षा खर्जूरो मदनान्यपि ८७
जीवकर्षभकौ मेदा बीजं नीलोत्पलस्य च
गर्भेणानेन संसिद्धं चटकाण्डरसायुतम् ८८
शर्करामधुसंयुक्त ---- ॥

इति भेल संहिता समाप्तम्